परमवक्रस्थानेऽपि बोध्यम्। तद्घातमूलं स्फुटो भवतीति पूर्ववदेव बोध्यम्।

हि० टी०—जन्मसमय में वर्क लग्न में चन्द्र और गुरु विद्यमान हों, बुध और शुक्र केन्द्र ( १, ४, ७, १० ) में विद्यमान हों और शेष ग्रह ( सूर्य, मङ्गल, शनि ) तृतीय, षष्ठ, एकादश ( ३, ६, ११ ) स्थान में विद्यमान हों तो अमितायु योग होता है। योगसम्बन्धी आयु अन्यत्र ग्रन्थों से ज्ञात करें। इस ग्रन्थ में गणितागत आयुर्दाय कहता हूँ। चेष्टागुणकसाधन—पूर्वसाधित रश्मि यदि ३ से अल्प हो तो रश्मि में १ जोड़कर योगफल का चतुर्थांश ग्रहण करना, यदि पूर्वसाधितरश्मि ३ से अधिक हो तो रश्मि में १ घटाकर आधा करने से चेष्टारश्मि द्वारा चेष्टागुणक एवं उच्चरश्मि द्वारा उच्चगुणक होता है। चेष्टा एवं उच्च दोनों गुणकों के घात का मूल स्फुटगुणक होता है।

उदा०—स्फुटगुणक साधन—

सूर्य — (२।२२।६ + १) / ४ = ३।२२।६ = ०।५०।३२ = चेष्टागुणक

( १।२५।१८ + १ ) × ४ = ०।३६।२० = उच्चगुणक

√(०।५०।३२) × (०।३६।२०) = ०। ०।४३ = स्फुटगुणक

चन्द्र — ( २।५२।४८ + १ ) × ४ = ०।५८।१२ = चेष्टागुणक

( ३।४१। ६ − १ ) ÷ २ = १।२०।३३ = उच्चगुणक

√(०।५८।१२) × (१।२०।३३) = ०। १। ८ = स्फुटगुणक

भौम — ( २।४४।३० + १ ) ÷ ४ = ०।५६। ८ = चेष्टागुणक

( २।४३।१२ + १ ) ÷ ४ = ०।५५।४८ = उच्चगुणक

√(०।५६। ८) × (०।५५।४८) = ०। ०।५६ = स्फुटगुणक

बुध — ( २। ७।३६ + १ ) ÷ ४ = ०।४६।५४ = चेष्टागुणक

( ३।४४।२४ − १ ) ÷ २ = १।२२।१२ = उच्चगुणक

√(०।४६।५४) × (१।२२।१२) = ०। १। २ = स्फुटगुणक

गुरु — ( १।३१।२४+१ ) ÷ ४ = ०।३७।५१ = चेष्टागुणक

( १।३५।३६+१ ) ÷ ४ = ०।३८।५४ = उच्चगुणक



√( ०।३७।५१ )×(०।३८।५४ ) = ०।०।३८ = स्फुटगुणक

शुक्र — ( १।१५।४२ + १ ) ÷ ४ = ०।३३।५५ = चेष्टागुणक

( १।१६।४२ + १ ) ÷ ४ = ०।३४।५५ = उच्चगुणक

$\sqrt{(\text{०।३३।५५} \times (\text{०।३४।५५})}$ = ०। ०।३४ = स्फुटगुणक

शनि — ( १।२३।३० + १ ) ÷ ४ = ०।३५।५२ = चेष्टागुणक

( ३।८।१२ − १ ) ÷ २ = १। ४। ६ = उच्चगुणक

$\sqrt{(\text{०।३५।५२}) \times (\text{१।४।६})}$ = ०। ०।४८ = स्फुटगुणक

## चेष्टागुणकचक्रम्

| सू. | चं. | मं. | बु. | बृ. | शु. | श. |
|---|---|---|---|---|---|---|
| ० | ० | ० | ० | ० | ० | ० |
| ५० | ५८ | ५६ | ४६ | ३७ | ३३ | ३५ |
| १ | १२ | ८ | ५४ | ५१ | ५५ | ५२ |

## उच्चगुणचक्रम्

| सू. | चं. | मं. | बु. | बृ. | शु. | श. |
|---|---|---|---|---|---|---|
| ० | १ | ० | १ | ० | ० | १ |
| ३६ | २० | ५५ | २२ | ३८ | ३४ | ४ |
| २० | ३३ | ४८ | १२ | ५४ | ५५ | ६ |

## स्फुटगुणकचक्रम्

| सू. | चं. | मं. | बु. | बृ. | शु. | श. |
|---|---|---|---|---|---|---|
| ० | ० | ० | ० | ० | ० | ० |
| ० | १ | ० | १ | ० | ० | ० |
| ४६ | ८ | ५६ | २ | ३६ | ३४ | ४८ |

अथाश्रयगुणकसाधनम्—

यः स्वाधीष्टसुहृत्समार्यधिरिपोर्वर्गे धृतिश्चेष्विला-
विश्वाङ्केषुगुणा गृहे द्विगुणिता योगः क्रमात्तं हरेत् ।
तद्भे षड्वसुगोऽशुमद्धृतिजिनैः षड्घ्नैश्च वर्गोत्तम-
स्वांशत्र्यंशगते सदा रसगुणैः स्यादाश्रयाख्यो गुणः ॥१७॥

अन्वयः—यः स्वाधीष्टसुहृत्समार्यधिरिपोर्वर्गे स्थितस्तस्य क्रमात् धृतिः इष्विला-विश्व-अङ्क-इषु-गुणाः अङ्काः स्थाप्याः, गृहे द्विगुणिताः स्थाप्याः। योगं तद्भे क्रमात् षड्वसुगोऽशुमद्धृतिजिनैः षड्घ्नैः हरेत्। वर्गोत्तम-स्वांशत्र्यंशगते सदा रसगुणैः हरेत्। एवं कृते आश्रयाख्यो गुणः स्यात्।

व्याख्या—यो ग्रहः स्वाधीष्टसुहृत्समार्यधिरिपोर्वर्गे = गृहहोरादि-सप्तवर्गे स्थितस्तस्य क्रमात् धृतिः, इष्विलाविश्वांकेषुगुणाः=क्रमेण अष्टादश-पञ्चदश-त्रयोदश-नव-पञ्च-त्रीणि अङ्काः गृहहोरादि वर्गेषु स्थाप्याः। अर्थात् स्वगृहे धृतिः = १८, अधीष्टभे इष्विलाः १५, मित्रभे विश्व = १३ समभे अङ्काः = ९, अरिभे इषवः = १५, अधिशत्रुभे गुणाः ३ अङ्का स्थाप्याः। तत्र गृहे = गृहवर्गे द्विगुणिताः स्थाप्याः, होरादौ च पठिताङ्का एव स्थाप्याः। यथा—स्वगृहे षट्त्रिंशत् = ३६, स्वहोरादावष्टादश = १८, अधिमित्रगृहे त्रिंशत् = ३०, अधिमित्रहोरादौ पञ्चदश = १५, इति ज्ञेयम्। एवं सप्तवर्गस्थापिताङ्कानां योगः कार्यस्तं योगं तद्भे = तेषां स्वाधीष्टसुहृत्स-मादीनां भे = गृहे स्थिते ग्रहे सति क्रमात् षड्वसुगोऽशुमद्धृतिजिनैः षड्घ्नैः = षड्गुणितैर्हरेत् ( अर्थात् स्वगृहे षड्गुणितषड्भिः ( ३६ ), अधिमित्रगृहे षड्घ्नवसुभिः ( ४८ ), मित्रगृहे षड्गुणितनवभिः ( ५४ ), समराशौ षड्गुणितद्वादशभिः ( ७२ ) शत्रुभे षड्घ्नधृतिभिः ( १०८ ), अधिशत्रुभे षड्गुणितजिनैः ( १४४ ) भजेत्। तथा च वर्गोत्तमस्वांश-त्र्यंशगते ग्रहे सदा रसगुणैः = षट्त्रिंशता तं योगं भजेत्। एवं कृते लब्धिराश्रयाख्यो गुणः स्यात्।

उप०—गृहादिसप्तवर्गेषु होरादयः षड्वर्गास्तुल्यभागा एव। तथा च "होरादिवर्गाद् द्विगुणं गृहं यत्" इति वचनेन राशेर्द्विगुणत्वादष्टौ वर्गास्तेनाष्टभक्तो गुणो होरादिवर्गेषु भवितुमर्हति। तथा च गृहस्थाने द्विगुणितोऽष्टमांशः = $\frac{1 \times 2}{8} = \frac{1}{4}$ स्थाप्यः। एवमेव "वर्गोत्तमे स्वभवने

स्वनवांशके च स्वत्र्यंशके च गुणको द्वितयं निरुक्तः" इति वचनेन स्वगृहे गुणः २, पूर्वोक्त्याऽष्टभक्तः $=\frac{२}{८}=\frac{१}{४}$ अयं गृहादिके वर्गगणे स्वकीये द्विको गुणः ...×२, इत्यादियुक्त्या द्विगुणितः $\frac{१}{२}=\frac{१८}{३६}$ ।

= स्वहोरादौ गुणः एवमेवाधि मित्र गृहे गुणः $=\frac{३}{२}$,

अष्टभक्तः $\frac{३}{२}\div\frac{८}{१}=\frac{३}{२}\times\frac{१}{८}=\frac{३}{१६}$

अयं अधिमित्र गुणकेन $\frac{५}{३}$ गुणितः $=\frac{३}{१६}\times\frac{५}{३}=\frac{१५}{४८}=$ अधिमित्रहोरादौ गुणकः । एवं मित्रगृहे गुणः १, अष्टभक्तः $\frac{१}{८}$ । अयं "गृहादिके वर्गगणे" इत्यादिना मित्रगृहगुणकेन $\frac{१३}{९}$ अनेन गुणितः $=$ $\frac{१}{८}\times\frac{१३}{९}=\frac{१३}{७२}=$ मित्रहोरादौ गुणः । एवमेव सप्तवर्गगुणाङ्का हराश्चोत्पद्यन्ते । राशिस्थाने "होरादिवर्गाद् द्विगुणं गृहं यत्" इति वाक्याद् द्विगुणः कार्य एव । अथ च वर्गोत्तमस्वांशस्वत्र्यंशगते ग्रहे पूर्वयुक्त्या गुणः २, अयं चतुर्भक्तः $=\frac{२}{४}=\frac{१}{२}$ । अतोऽनुपातो यदि तत्तद्गृहगुणकेन तत्तद्होरादिगुणो लभ्यते तदा ( $\frac{१}{२}$ ) अनेन किमिति गुणास्तावन्तः पाठपठिता एव हरस्थाने षट्त्रिंशत् ३६ अङ्का उपपद्यन्ते । अत एव "सदा रसगुणैः" इत्युपपद्यते ।

हि०टी०—अपने वर्ग मे ग्रह रहने पर १८, अधिमित्र के वर्ग में १५, मित्र के वर्ग में १३, सम के वर्ग में ९, शत्रु के वर्ग में ५, अधिशत्रु के वर्ग में ३, होरादि षड्वर्गों में अंक स्थापित करे। गृहस्थान में उक्त अंकों को द्विगुणित कर स्थापित करे। सम्पूर्ण अङ्कों का योग कर ग्रह अपनी राशि का हो तो ३६ से यदि अधिमित्र की राशि में हो तो ४८ से अपने मित्र की राशि में हो तो ५४ से अपने सम ग्रह की राशि में हो तो ७२ से अपने शत्रु की राशि में हो तो १०८ तथा अपने अधिशत्रु की राशि में ग्रह स्थित हो तो १४४ से उक्त योग में

भाग देने से आश्रय गुणक होता है। ग्रह स्वनवांश अथवा वर्गोत्तम नवांश या स्वद्रेष्काण में स्थित हो तो योगाङ्क में केवल ३६ का भाग देने से आश्रय गुणक होता है।

उदा०—आश्रयगुणकसाधन—

सूर्य बुध के घर में बैठा है। बुध रवि का मित्र है। मित्र के घर में १३ अङ्क है। गृहस्थान में द्विगुणित अङ्क लिखना चाहिये। अतः रवि के गृह स्थान में २६ अङ्क लिखा जायगा। इसी प्रकार सूर्य चन्द्र की होरा में है। चन्द्र रवि का सम है। सम में ६ अङ्क होने से रवि के होरा कोष्ठक में ६ अङ्क लिखा जायगा। द्रेष्काण विचार से रवि शनि के द्रेष्काण में है। शनि रवि का सम है। अतः रवि के द्रेष्काण कोष्ठक में ६ अङ्क लिखा जायगा। सप्तमांश चक्र में रवि बुध के सप्तमांश में है। बुध रवि का मित्र है। अतः रवि के सप्तमांश कोष्ठक में १३ अङ्क लिखा जायगा। इसी प्रकार रवि के नवमांश कोष्ठक विचार से रवि शुक्र के नवमांश में है। शुक्र रवि का अधिशत्रु है। अतः रवि के नवमांश कोष्ठक में ३ अङ्क होगा। द्वादशांश चक्र में रवि शनि के द्वादशांश में है। शनि रवि का सम है। अतः रवि के द्वादशांश कोष्ठक में ६ अङ्क होगा। त्रिंशांश में रवि गुरु के त्रिंशांश में है। गुरु रवि का सम है। अतः त्रिंशांश कोष्ठक में ६ अङ्क लिखा जायेगा। इसी प्रकार अन्य ग्रहों का सभी वर्गों में साधन करना चाहिये।

## गृहादिवर्गेष्वङ्कबोधकचक्रम्

| | सू. | चं. | मं. | बु. | बृ. | शु. | श. |
|---|---|---|---|---|---|---|---|
| गृ. | २६ | १० | ३६ | ३० | १० | ३० | १८ |
| हो. | ६ | ६ | ६ | ६ | ६ | ३ | ६ |
| द्रे. | ६ | १३ | १५ | १३ | ३ | १५ | ६ |
| स. | १३ | ५ | ६ | ५ | १५ | १३ | १८ |
| न. | ३ | १८ | १३ | ५ | ५ | ५ | ५ |
| द्वा. | ६ | १३ | १५ | ६ | ३ | १३ | ६ |
| त्रि. | ६ | १३ | ६ | १५ | १८ | १५ | १५ |
| यो. | ७८ | ८१ | १०६ | ८६ | ६३ | ६४ | ८३ |

सूर्य—सूर्य अधिमित्र की राशि में है। अतः योग ७८ में ४८ का भाग देने पर लब्धि १।३७।३० है। अतः रवि का आश्रय गुणक= १।३७।३० हुआ।

चन्द्र—चन्द्र स्वनवांश में है। अतः योग ८१ में ३६ का भाग देने पर चन्द्र का आश्रयगुणक=२।१५।० हुआ।

भौम—मङ्गल अपनी राशि का है। अतः योग १०६ में ३६ का भाग देने पर मङ्गल का आश्रयगुणक=२।५६।४० हुआ।

बुध—बुध अधिमित्र की राशि में है। अतः योग ८६ में ४८ का भाग देने पर बुध का आश्रयगुणक=१।४७।३० हुआ।

गुरु—गुरु शत्रु की राशि में है। अतः योग ६३ में १०८ का भाग देने पर गुरु का आश्रयगुणक=०।३५।० हुआ।

शुक्र—शुक्र अधिमित्र की राशि में है। अतः योग ९४ में ४८ का भाग देने पर शुक्र का आश्रयगुणक=१।५७।३० हुआ।

शनि—शनि सम की राशि में है। अतः योग ८३ में ७२ का भाग देने पर शनि का आश्रयगुणक=१।९।१० हुआ।

आश्रयगुणकबोधकचक्रम्

| सू. | चं. | मं. | बु. | बृ. | शु. | श. |
|---|---|---|---|---|---|---|
| १ | २ | २ | १ | ० | १ | १ |
| ३७ | १५ | ५६ | ४७ | ३५ | ५७ | ९ |
| ३० | ० | ४० | ३० | ० | ३० | १० |

अथाश्रयगुणके संस्कारविशेषं, कर्म्मयोग्यगुणकमंशायुर्दायोपगिनो दायांशाश्चाह—

चेद्वर्गोत्तमपूर्वगोऽथ्यरिसुहृद्भे तद्गृहाङ्कात् त्रिषड्-
लब्ध्योनो युगरीष्टभेऽङ्घिनवकाप्त्या स्वे समे केवलः।
कार्यस्त्वाश्रयकः स तत्स्फुटहतेर्मूलं स योग्यो गुणः
खेटानां च तनोर्लवाः खयुगहृच्छेषा इहांशायुषः॥१८॥

अन्वयः—चेद् वर्गोत्तमपूर्वगो भवेत् तदा तद्गृहाङ्कात् त्रिषड्लब्ध्या आश्रयगुणकः अध्यरिभे ऊनः अधिसुहृद्भे युक्, अरीष्टभे वर्गोत्तमपूर्वगश्चेत् तदा गृहाङ्कात् अब्धिनवकाप्त्या लब्धोनो युगाश्रयगुणकः कार्यः। तथा स्वे समे वा ग्रहो भवेत्तदा केवलः आश्रयगुणकः। तत्स्फुटहृतेर्मूलं स योग्यो गुणः स्यात्। इह खेटानां तनोर्लवाः च खयुगह्च्छेषा अंशायुषो भवन्ति।

व्याख्या—चेद् यदि ग्रहो वर्गोत्तमपूर्वगो = वर्गोत्तमनवांशस्वनवांशस्वद्रेष्काणेष्वन्यतमस्थो भवेत्तदा तद्गृहाङ्कात् = गृहवर्गस्थापिताङ्कात्, त्रिषड्लब्ध्या = त्रिषष्टिभक्तलब्धफलेन क्रमेणाश्रयगुणक ऊनो युक् अर्थात् अधिशत्रुराशौ ग्रहे ऊनोऽधिमित्रराशौ स्थिते ग्रहे युक्तः कार्य इति शेषः। एवं अरीष्टभे ग्रहो अर्थाद्वर्गोत्तमपूर्वगश्चेच्छत्रुमित्रगृहे भवेत्तदा गृहाङ्कात् अब्धिनवकाप्त्या = चतुर्णवत्या लब्ध्योनोयुगाश्रयगुणकः कार्यः। तथा वर्गोत्तमपूर्वगः स्वे = स्वराशौ, समे = समराशौ वा ग्रहो भवेत्तदा = पूर्वसाधितएवाश्रयगुणको भवेत्। तत्स्फुटहृतेर्मूलं = आश्रयगुणकस्पष्टगुणकयोर्घातान्मूलं स योग्यो गुणः = कर्मयोग्यो गुणो भवति। इह खेटानां = ग्रहाणां, तनोः = लग्नस्य लवाः = अंशाः, खयुगह्च्छेषा अंशायुषो दायांशा भवन्ति।

उप०—यदि वर्गोत्तमादिस्थानेष्वन्यतमस्थानस्थितो ग्रहोऽध्यरिभे भवेत्तदा "यः स्वाधीष्टेत्यादिना" गृहगुणकः = $\frac{\text{गृहाङ्कः}}{३६}$।

तथा च अध्यरिभे त्रयोनगांशाः $\frac{(३)}{७}$ त्रिगुणितसप्तमांशो वास्तवगुणः स्यात्। अतो वास्तवगुणः =

$$\frac{\text{गृहाङ्क}\times\frac{३}{७}}{३६} = \frac{\text{गृहाङ्क}}{३६}\times\left(१-\frac{४}{७}\right)$$

$$\frac{\text{गृहाङ्क}}{३६} - \frac{\text{गृहाङ्क}\times४}{३६\times७}$$

$$= \frac{\text{गृहाङ्क}}{३६} - \frac{\text{गृहाङ्क}}{६३}$$ । एतेन अध्यरिभे गृहाङ्कात् त्रिषड्लब्ध्योन इत्युपपद्यते। तथा च "नगांशका रुद्रमिता अधीष्टराशौ" इति वचनेन

अधिमित्रभे वास्तवगुणः $= \frac{\text{गृहाङ्क}}{३६} \times \frac{११}{७} = \frac{\text{गृहाङ्क}}{३६} \times १ - \frac{४}{७}$

$$\frac{\text{गृहाङ्क}}{३६} + \frac{\text{गृहाङ्क} \times ४}{३६ \times ७} = \frac{\text{गृहाङ्क}}{३६} + \frac{\text{गृहाङ्क}}{६३}$$ । एतेन

अधिसुहृद्भे गृहाङ्कात् त्रिषष्टिलब्ध्या युक् इत्युपपन्नं भवति। तथा च "सुहृद्वेश्मनि मूर्च्छनांशा नवाश्विनः"

$\frac{२९}{२१}$ इति वचनेन मित्रराशौ वास्तवगुणः

$$= \frac{\text{गृहाङ्क}}{३६} \times \frac{२९}{२१} = \frac{\text{गृहाङ्क}}{३६}\left(१ + \frac{८}{२१}\right) = \frac{\text{गृहाङ्क}}{३६} + \frac{\text{गृहाङ्क} \times ८}{३६ \times २१}$$

$$= \frac{\text{गृहाङ्क}}{३६} + \frac{\text{गृहाङ्क} \times २}{१८९} = \frac{\text{गृहाङ्क}}{३६} + \frac{\text{गृहाङ्क}}{९४\frac{१}{२}} = \frac{\text{गृहाङ्क}}{३६} + \frac{\text{गृहांक}}{९४}$$

स्वल्पान्तरात्। एवं "कुदृग्व्यंशका विश्वमिता द्विषद्भे" इतिवचनेन शत्रुभेऽब्धिनवकाप्त्योन इत्युपपद्यते। अथ समभे स्वराशौ च रूपगुणत्वात् "केवलः" यथागत एवाश्रयगुण इत्यपि साधुसङ्गच्छते। घातमूलं स्फुटं भवत्येव।

दायांशोपपत्तिः—प्राचीनाचार्याणां वचनप्रामाण्यात् "ग्रहभुक्तनवांशराशितुल्यं" आयुर्वर्षप्रमाणमिति सिध्यति। अतो भुक्तनवांशज्ञानार्थमनुपातो भवति। यदि त्रिंशदंशैर्नव नवांशसंख्या लभ्यते तदा ग्रहलग्नभुक्तांशैः किमिति ग्रहलग्नभुक्तनवांशसंख्या। सा च राशीनां द्वादशत्वाद् द्वादशभिर्भक्ता, अतो लब्धिः =

$$\frac{\text{भुक्तांश} \times ९}{३० \times १२} = \frac{\text{भुक्तांश}}{४०}$$ शेषराश्यादि तुल्या अंशायुषो

( दायांशाः ) भवन्तीत्युपपद्यते।

हि० टी०—यदि ग्रह वर्गोत्तम, स्वनवांश अथवा स्वद्रेष्काण में स्थित होकर अधिशत्रु की राशि में स्थित हो तो गृहाङ्क को ६३ से भाग देकर लब्धि को आश्रयगुणक में घटाने से वास्तव आश्रयगुणक होता है। यदि वर्गोत्तमनवांश, स्वनवांश अथवा स्वद्रेष्काण में स्थित होकर अधिमित्र की राशि में स्थित हो तो लब्धि को आश्रयगुणक में जोड़ने से वास्तव आश्रयगुणक होता है। यदि ग्रह

शत्रु की राशि में स्थित हो तो गृहाङ्क को ६४ से भाग देकर लब्धि को आश्रयगुणक में घटाने से तथा मित्र की राशि में स्थित हो तो लब्धि को जोड़ने से वास्तव आश्रयगुणक होता है। यदि ग्रह सम की राशि अथवा स्वगृह में हो तो केवल पूर्वसाधित आश्रयगुणक ही ग्रहण करना चाहिये। आश्रयगुणक और स्फुटगुणकों के घात का मूल लेने पर कर्मयोग्यगुणक होता है। लग्न अथवा ग्रह को अंशात्मक बनाकर ४० का भाग देने से शेष आयुर्दाय (दायांश) होता है।

उदा०—चन्द्र स्वनवांश में स्थित होकर शत्रु की राशि में है। अतः चन्द्र के गृहाङ्क १० में ६४ का भाग देकर लब्धि ०।६।२३ को चन्द्र का आश्रयगुणक २।१५।० में घटाने पर शेष २।८।३७ चन्द्र का वास्तव आश्रयगुणक हुआ। शेष ग्रहों का पूर्व आश्रयगुणक में संस्कार नहीं होगा।

$$\sqrt{\text{आश्रयगुणक} \times \text{स्फुटाश्रयगुणक}} = \text{कर्मयोग्यगुणक}$$

## कर्मयोग्यगुणकबोधचक्रम्

| सू. | चं. | मं. | बु. | बृ. | शु. | श. |
|---|---|---|---|---|---|---|
| १ | २ | २ | १ | ० | १ | १ |
| ३७ | १२ | ५६ | ४७ | ३५ | ५७ | ६ |
| ३० | ४८ | ४० | ३० | ० | ३० | १० |

**दायांशसाधन—**

लग्न अथवा ग्रह का अंशादिमान ÷ ४० = दायांश (शेष)

## दायांशबोधकचक्रम्

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ल. |
|---|---|---|---|---|---|---|---|
| ३४ | ११ | २१ | २६ | ३० | ३७ | २८ | ३४ |
| ४३ | ५५ | १४ | २२ | ३८ | १७ | १४ | १२ |
| २५ | ३८ | २४ | २२ | ३८ | ४ | २ | ३० |

अथ चक्रार्धहानिमाह—

षड्भाल्पे सति खेचरोन उदयेऽस्यांशोद्धृतैःखाग्निभि-
स्त्वेकाल्पेऽस्य च खाग्निभाजितलवैः सौम्योनितेत्वर्धितैः ।
ऊना भूर्गुण एकभे द्विबहुषु त्वेकस्य बह्वोजसः
कार्यस्तद्गुणिताः स्वदायजलवाश्चक्रार्धहानिस्त्वियम् ॥१९॥

अन्वयः—खेचरोने उदये षड्भाल्पे सति अस्यांशोद्धृतैः खाग्नि-भिरूना भूर्गुणः स्यात् । एकाल्पे चास्य खाग्निभाजितलवैः ऊना भूर्गुणः स्यात् । सौम्योनिते उदये त्वर्धितैः खाग्निभाजितलवैः ऊना भूर्गुणो भवति । एकभे द्विबहुषु तु एकस्य बह्वोजसः गुणः कार्यः । तद्गुणिताः स्वदायजलवाश्चक्रार्धहानिर्भवेत् ।

व्याख्या—खेचरोने=ग्रहोने उदये=लग्ने षड्भाल्पे सति अस्य=षड्भाल्पस्य लग्नोनखेचरस्यांशोद्धृतैः खाग्निभिरूना भूः=एको गुणः स्यात् । षडधिके ग्रहोनोदये हानिर्नेति सिध्यति । तथा च ग्रहोनोदये एकाल्पे सति अस्य खाग्निभाजितलवैः=त्रिंशद्भक्तांशैरूना भूर्गुणो भवति । सौम्योनिते=शुभग्रहोने उदये तु अर्धितैः=दलितैरंशोद्धृतैः खाग्निभिः अर्धितैः खाग्निभाजितलवैर्वा ऊना भूर्गुणो भवति । एकभे=एकराशौ द्विबहुषु=द्वित्र्यादिषु ग्रहेषु सत्सु एकस्य बह्वोजसः अधिक-बलस्य गुणः कार्यः न तु सर्वस्य । तद्गुणिताः स्वदायजवाः कार्याः, इयं चक्रार्धहानिर्भवेत् ।

उप०—

"सर्वार्धं त्रिचरणपञ्चषष्टभागाः क्षीयन्ते व्ययभवनादसत्सु वामम् ।
सत्स्वर्धं ह्रसति तथैकराशिगानामेकोंऽशं हरति बली तथाह सत्यः ॥"

इति प्राचीनाचार्याणां वचनप्रामाण्याल्लग्नाद्व्ययस्थाने स्थिते पापग्रहे आयुषः सर्वांशः क्षीयते । एवमेव लग्नतः द्वादशे गते च शुभग्रहे आयुषोऽर्धभागो हरति । तत्र खेचरोनोदयो राशितुल्यम् । एवमेव लग्नत एकादशस्थाने स्थिते पापेऽर्धांशो नश्यति । तत्र तु ग्रहोनलग्नो राशिद्वय-तुल्यः, दशमे च स्थिते ग्रहे ग्रहोनलग्नस्य प्रमाणं राशित्रयमितम्, तत्र त्र्यंशहानिः, नवमे पापग्रहे तु द्वयोरन्तरं राशिचतुष्टयं, तत्र चतुर्थांशहानिः । एवमेव यथा यथा अन्तरं वर्धते तथा तथा आयुषो हानिह्रस्वद्धिर्भवत्यतोऽनुपातो यदि त्रिंशदंशैरेको हरस्तदेष्टखेचरोनोदयांशैः क इति इष्टहरः=

$\frac{\text{इष्टान्तरं}\times १}{३०}$। अनेन लब्धफलेनायुर्लवा भक्ता जाता हानिलवाः $=$ $\frac{\text{आ० अं०}\times ३०}{\text{इ० अं०}}$। अनेन फलेन हीना आयुषोंऽशा जाता इष्टायुर्लवाः

$$= \text{आ० अं०} - \frac{\text{आ० अं०}\times ३०}{\text{इ० अं०}} = \frac{\text{इ० अं०}\times\text{आ० अं} - \text{आ० अं}\times ३०}{\text{इ० अं०}}$$

$$= \frac{\text{आ० अं०}\,(\text{इ० अं०} - ३०)}{\text{इ० अं०}} = \left(१ - \frac{३०}{\text{इ०अं०}}\right)$$

। एकराशितोऽल्पे ग्रहोनोदये तदंशभक्तत्रिंशतो एकाधिकत्वात् रूपान्न शुद्ध्यतीति व्यस्त-त्रैराशिकेन खाग्निभाजितलवैरित्युपपद्यत इति सर्वमुपपन्नम्।

हिं० टी०—लग्न में ग्रह को घटाने पर शेष यदि ६ राशि से अल्प हो तो अंश बनाकर ३० में भाग देने पर जो लब्धि हो उसे एक में घटाने पर शेष गुणक होता है। ग्रहोन लग्न १ राशि से अल्प हो तो अंशादि अन्तर में ३० का भाग देने पर लब्धि को १ में घटाने पर गुणक होता है। इस प्रकार पापग्रहों का गुणक सिद्ध होता है। यदि शुभग्रह का गुणक साधन करना हो तो लब्धि का आधा १ में घटाने पर गुणक होता है। यदि एक राशि में दो या दो से अधिक ग्रह हों तो उनमें सबसे बली ग्रह का ही गुणक साधन करना चाहिये। साधित गुणक एवं दायांश को गुणा करने पर चक्रार्धहानि होती है। लग्न में ग्रह घटाने पर शेष ६ राशि से अधिक हो तो चक्रार्धहानि नहीं होती है।

उदा०—सूर्य, शुक्र कन्या राशि तथा शनि, बुध सिंह राशि में हैं। सूर्य और शुक्र में शुक्र बली तथा बुध एवं शनि में बुध बली है। अतः चन्द्र, भौम, बुध, गुरु, शुक्र पाँच ग्रहों का ही गुणक साधन किया जायगा। लग्न में भौम तथा गुरु को घटाने पर शेष ६ राशि से अधिक है। अतः चन्द्र, बुध एवं शुक्र तीन ग्रहों का गुणक सिद्ध होगा। तीनों शुभ ग्रह हैं। अतः लग्न में ग्रह को घटाकर शेष को अंशादि बनाकर ३० में भाग देने पर लब्धि के आधा को १ में घटाने पर गुणक होगा। साधितगुणक एवं दायांश (आयुर्दायभाग) को गुणा करने पर चक्रार्धहानि होगी।

गुणकबोधकचक्रम्

| चं० | बु० | शु० |
|---|---|---|
| ० | ० | ० |
| ५१ | ३६ | ३५ |
| ४१ | ५५ | ३७ |

चक्रार्धहानिबोधकचक्रम्

| चं० | बु० | शु० |
|---|---|---|
| १० | १६ | २२ |
| ४० | ३२ | ७ |
| १८ | २१ | ५७ |

चक्रार्धहानिसंस्कृतदायांशाः

| सू. | च. | मं. | बु. | बृ. | शु. | श. | ल. |
|---|---|---|---|---|---|---|---|
| ३४ | १० | २१ | १६ | ३० | २२ | २८ | ३४ |
| ४३ | ४० | १४ | ३२ | ३८ | ७ | १४ | १२ |
| २५ | १८ | २४ | २१ | ३८ | ५७ | २ | ३० |

अथ वर्षाद्यंशायुरानयनम्—

दायांशोत्थकलाः स्वयोग्यगुणकघ्नाः खाभ्रनेत्रोद्धृता
अंशायुर्द्युसदां समादि च तनोर्दायांशकास्त्र्याहताः ।
दिग्भक्ता हि समादि चेत्तु बलवल्लग्नं तदा लग्नभै-
स्तुल्याब्दैः सहितं द्विनिघ्नशरहृद्भागादितो मासयुक् ॥२०॥

अन्वयः—द्युसदां दायांशोत्थकलाः स्वयोग्यगुणकघ्नाः खाभ्रनेत्रोद्धृताः लब्धं समादि अंशायुः । तु तनोर्दायांशकाः त्र्याहताः दिग्भक्ताः लग्नस्य समाद्यंशायुर्भवति । चेत्तु बलवल्लग्नं तदा लग्नभैस्तुल्याब्दैः सहितं कार्यम् । तथा द्विनिघ्नशरहृद्भागादितो मासयुक् लग्नायुः स्फुटं स्यात् ।

व्याख्या—द्युसदां = ग्रहाणां दायांशोत्थकलाः = चक्रार्धहानिसंस्कृतदायांशकलाः स्वयोग्यगुणकघ्नाः = स्वकर्मयोग्यगुणकेन गुणिताः, खाभ्रनेत्रोद्धृताः = द्विशत्या हृता लब्धं समादि = वर्षाद्यमंशायुर्भवति । तु = पुनः तनोः = लग्नस्य दायांशकाः त्र्याहताः = त्रिभिर्निहता दिग्भक्ताः = दशभिर्हृता लब्धं लग्नस्य समादि=वर्षाद्यमंशायुर्भवति । चेत्तु बलवल्लग्नं षड्रूपाधिकबलं लग्नं चेत्तदा लग्नभैः = लग्नभुक्तराशिभिस्तुल्याब्दैः सहितं कार्यम् । तथा द्विनिघ्नशरहृद्भागादितो मासयुक् अर्थात् द्विगुणिताद् लग्नवर्तमानराश्यंशादितः पञ्चभक्ताल्लब्धमासाद्यं मासादौ युक्तं कार्यमिति । एवं कृते लग्नायुः स्फुटं भवति । लग्नबलं यदि षड्रूपाल्पं तदा "दायांशकास्त्र्याहता दिग्भक्ताः" एव लग्नायुः स्यादिति ।

उप०—"ग्रहभुक्तनवांशराशिमितमायुः" इतिवचनप्रामाण्यादनुपातो भवति यद्येकनवांशकलाभि (२००') रेकं वर्षं तदा स्वयोग्यगुणक-

गुणितदायांशकलाभिः किमिति ग्रहाणामंशायुः प्रमाणं वर्षाद्यम्। अतो वर्षाद्यंशायुः $= \frac{\text{दायांश} \times \text{यो० गु०}}{२००'}$। अथ च लग्नायुः साधनार्थमनुपातो यदि त्रिंशदंशैर्नववर्षाणि तदा लग्नदायांशैः किमिति लग्नांशायुः प्रमाणम्। अतो लग्नांशायुः=

$$\frac{९ \times \text{ल० दा० अं०}}{३०} = \frac{३ \times \text{ल० दा० अं०}}{१०}$$ । तथा

"वीर्योन्विता राशिसमं च होरा" इति वराहमिहिराचार्योक्तेः "लग्नभैस्तुल्याब्दैः सहितम्" इत्यपि युक्तियुक्तमेव। अथ चांशादिफलमनुपातेन— यदि त्रिंशदंशैर्द्वादशमासा लभ्यन्ते तदा लग्नांशैः किमिति मासादिफलम्=

$$\frac{१२ \times \text{ल० अं०}}{३०} = \frac{२ \times \text{ल० अं०}}{५}$$ । अनेन फलेन युक्तं

स्फुटं वर्षाद्यं लग्नायुः प्रमाणं जायते। लग्नस्य चक्रार्धहान्यादि संस्कारो न भवतीति सुधीभिर्विभाव्यम्।

हि० टी०—कलात्मक चक्रार्धहानि संस्कृत दायांशकला को स्वकर्मयोग्य-गुणक से गुणा कर २०० का भाग देने से वर्षादि ग्रहों की अंशायु होती है। लग्न के दायांश को ३ से गुणाकर गुणनफल में १० का भाग देने से लब्धि तुल्य वर्षादि लग्न की अंशायु होती है। लग्न का बल ६ से अधिक रहे तो लग्न की भुक्तराशि तुल्य वर्ष और जोड़ना चाहिये और लग्न के अंशों को दो से गुणा कर ५ का भाग देने से लब्धि तुल्य मासादि फल जोड़ने पर लग्न की स्पष्टायु होती है।

उदा०—स्पष्टायुसाधन—

सूर्य—३४°।४३'।२५"=२०८३'।२५"=दायांशकलाचक्रार्धहानि सं०

(२०८३'।२५"×१।३७।३०)÷२००=ल० १६, शेष १८५।३३।८

(१८५।३३।८×१२)÷२००=ल० ११ मास, शेष २६।३७।३६

(२६।३७।३६×३०)÷२००=ल० ३ दिन, शेष १९८।४८

(१९८।४८।०×६०)÷२००=ल० ५९ घ०, शेष १२८।०

(१२८।०।०×६०)÷२००=ल० ३८ प०, शेष ८०

(८०।०।०×६०)÷२००=ल० २४ विपल



अतः रवि का वर्षाद्यायुः=१६।११।३।५९।३८।२४

चन्द्र—१०°।४०'।१८"=६४०'।१८"=चक्रार्धहानिसंस्कृतदायांशकला

$\frac{(६४०'।१८" \times २।१२।४८)}{२००}$ = ७।१।०।५७।१६ वर्षाद्यंशायुः

भौम—२१°।१४'।२४"=१२७४'।२४"=चक्रार्धहानिसंस्कृतदायांशकला

$\frac{(१२७४'।२४" \times २।५६।४०}{२००}$ = १८।९।४।१६।१२ वर्षाद्यंशायुः

बुध—१६°।३२'।२१"=११७२'।२१"=चक्रार्धहानिसंस्कृतदायांशकला

$\frac{(११७२'।२१ \times १।४७।३०)}{२००}$ = १०।६।०।४६।४४।२४ वर्षाद्यंशायुः

गुरु—३०°।३८'।३८=१८३८'।३८"=चक्रार्धहानिसंस्कृतदायांशकला

$\frac{१८३८'।३८" \times ०।३५।०}{२००}$ = ५।४।१०।३३।५४ वर्षाद्यंशायुः

शुक्र—२२°।७।५७"=१३२७'।५७"=चक्रार्धहानिसंस्कृतदायांशकला

$\frac{(१३२७'।५७" \times १।५७।३०)}{२००}$ = १३।०।१।१।२५ ३० वर्षाद्यंशायुः

शनि—२८°।१४'।२=१६६४'।२" चक्रार्धहानिसंस्कृतदायांशकला

$\frac{(१६६६'।२" \times १।६।१०)}{२००}$ = ६।६।६।१३।६ वर्षाद्यंशायुः

लग्न—३४°।१२'।३०" दायांशाः

$\frac{\{(३४।१२।३०) \times ३\}}{१०}$ = १०।३।४।३०

लग्न का वर्षादि मान ६ से अधिक है। अतः अग्रिम क्रिया यथा—

लग्न की भुक्त राशि=६, अंशादि भुक्त=१४।१२।३०

{(१४।१२।३०)×२}÷५=५।२०।३० मासादिफल

लग्न की सिद्ध वर्षाद्यायुः = १०।३। ४।३०

लग्न की भुक्तराशि = ६ वर्ष

मासादि अंश सम्बन्धिफल = ५।२०।३०

लग्न की स्पष्टायुः = १६।९।२५। ०

वर्षाद्यंशायुबोधकचक्रम्

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ल. | यो. | |
|---|---|---|---|---|---|---|---|---|---|
| १६ | ७ | १८ | १० | ५ | १३ | ९ | १६ | ९८ | व. |
| २१ | १ | ९ | ६ | ४ | ० | ९ | ८ | १ | मा. |
| ३ | ० | ४ | ० | १० | १ | ९ | २५ | २५ | दि. |
| ५९ | ५७ | १९ | ४९ | ३३ | १ | १३ | ० | ५४ | घ. |
| ३८ | १९ | १२ | ४४ | ५४ | २५ | ९ | ० | २२ | प. |
| २४ | ० | ० | २४ | ० | ३० | ० | ० | १८ | वि. |

अथ पिण्डनिसर्गजीवशर्मायुर्दायोपयोगिनो दायांशानाह—

स्वोच्चोनो द्युचरोऽङ्गभात्समधिको ग्राह्योऽल्पकोनार्कभं
तद्भागा द्युचरोऽरिभे यदि गुणांशोना विना वक्रगम् ।
द्व्याप्ता अस्तमिते विना शनिसितौ हानिद्वयेऽत्राधिकै-
काथो पिण्डनिसर्गजीवगदिते चक्रार्धहानिर्भवेत् ॥ २१ ॥

अन्वयः—स्वोच्चोनो द्युचरः अङ्गभात् समधिको ग्राह्यः । अङ्गभादल्पकोनार्कभं ग्राह्यम् । तद्भागाः पिण्डनिसर्गजीवायुः गदिते । यदि वक्रगं विना द्युचरोऽरिभे 'तदा' तद्भागा गुणांशोनाः । अस्तमिते शनिसितौ विना तद्भागा द्व्याप्ता । अत्र हानिद्वये अधिकैकद्व्याप्ता । अथ पिण्डनिसर्गजीवगदिते चक्रार्धहानिर्भवेत् ।

व्याख्या—स्वोच्चोनो द्युचरः=स्वकीयोच्चेन हीनो ग्रहोऽङ्गभात्=षड्राशितः समधिको ग्राह्यः । अङ्गभादल्पकोनार्कभं=षड्राशितोऽल्पश्चेत्तदा द्वादशराशिभ्यो विशोध्य शेषं ग्राह्यम् । तद्भागाः=तदीयांशाः कार्याः । ते पिण्डनिसर्गजीवायुर्भागा ज्ञेयाः । वक्रगं=वक्रगतिकग्रहं विना द्युचरः अरिभे = शत्रुराशौ स्थितस्तदा तद्भागाः=तदीयांशाः गुणांशोनाः = स्वतृतीयांशेन हीनाः कार्याः । तथाऽस्तमिते = अस्तंगते ग्रहे शनिसितौ विना तद्भागा द्व्याप्ताः = अर्धिताः कार्याः । हानिद्वये प्राप्ते अधिका=अधिकैकैवार्धहानिरेव कार्या । अथानन्तरं पिण्डनिसर्गजीवगदितेऽपि चक्रार्धहानिर्भवेत् । अत्र शत्रुनैसर्गिको ज्ञेयः, न तु

स्तात्कालिक इति। अत्रेदमवधेयं यत् वक्रगतिको ग्रहः स्वत्र्यंशं नैवापहरति। तथा च शनि शुक्रावस्तं प्राप्तावपि स्वार्धं नैवापहरत इति।

उप०—स्वोच्चस्थे ग्रहे पठितायुः प्रमाणं स्वनीचस्थे च ग्रहे तदर्धमायुः प्रमाणं भवति। तत्र नीचस्थानात्षड्भान्तरिते स्वोच्चस्थे ग्रहे आयुरर्धतुल्य उपचयः स्यात्। मध्ये त्वनुपातेन इष्टोपचयः स्यात्। उक्तञ्च वराहमिहिराचार्येण—

"नीचेऽतोऽर्धं ह्रसति हि ततश्चान्तरस्थेऽनुपातः"।

अतोऽनुपातो यदि षड्राशितुल्येन नीचग्रहान्तरेणायुरर्धतुल्य उपचयस्तदेष्ट नीचग्रहान्तरेण किमितीष्टोपचयः।

अत इष्टोपचयः $= \frac{\text{आ०} \times (\text{ग्र} - \text{नी})}{२ \times ६}$, अनेन फलेन युतं नीचस्थानीयायुरर्धमिष्टायुः प्रमाणम् =

$$\frac{\text{अ}}{२} + \frac{\text{आ०} (\text{ग्र} - \text{नी})}{१२} = \frac{(६ \times \text{आ०} + \text{आ०} \ \text{ग्र०} - \text{नी})}{१२}$$

$$= \frac{\text{आ०} \times (६ + \text{ग्र} - \text{नी})}{१२} = \frac{\text{आ०} \times (\text{ग्र} - \text{उ०})}{१२}।$$

अत्र तु द्वादशराशिर्यदि पठितायुः प्रमाणं तदोच्चोनग्रहराशिभिः किमित्यनुपातो लक्ष्यते। तत्राचार्येणांशानुपात एव कृतो यथा—यदि द्वादशराशिसम्बन्धिरंशैः ( ३६०° ) पठितायुः प्रमाणं लभ्यते तदोच्चोनग्रहांशैः किमिति ? अत एव "दायांशाः स्वगुणैर्हता हि भागणांशाल्पा" इत्यग्रे आचार्यो वक्ष्यति। तथा चात्र $६ < ६ + \text{ग्र} - \text{नी} = \text{ग्र} - \text{उ}$।

"अतः षड्राशिअधिकेनोच्चग्रहान्तरेण भवितव्यमतः" अङ्गभात् समधिको ग्रह्योऽल्पकोनार्कभम् इत्युपपद्यते। "हित्वा वक्रं रिपुगृहगतैर्हीयते सत्रिभागः सूर्योच्छिन्नद्युतिषु च दलं प्रोज्झ्य शुक्रार्कपुत्रौ"। इत्यादि वचनप्रामाण्यात् त्र्यंशार्धहानिरुपपद्यते।

ग्रह में उच्च को घटाने पर शेष यदि ६ राशि से अधिक हो तो अंशात्मक बनाने पर पिण्डादि त्रिकायुर्भाग होता है। यदि ग्रह में उच्च को घटाने पर शेष ६ राशि से अल्प हो तो १२ राशि में घटाकर अंशात्मक बनाने पर पिण्डादि त्रिकायुर्भाग होता है। ग्रह शत्रुराशि का हो तो आयुर्भाग में तृतीयांश घटाना चाहिये। यदि वक्रगतिक ग्रह हो तो उस ग्रह में भी त्र्यंश हानि नहीं होती।

यदि ग्रह अस्त हो तो आयुर्भाग में आधा कम होता है। शुक्र और शनि यदि अस्त हों तो अर्द्ध हानि नहीं होती है। अर्धहानि एवं त्र्यंशहानि दोनों यदि प्राप्त हों तो अर्धहानि ही होती है। पिण्डादित्रिकायु ( पिण्ड-निसर्ग-जीवायु ) में भी चक्रार्धहानि होती है। शत्रु का विचार नैसर्गिक ग्रहण करना चाहिये तात्कालिक नहीं।

उदा०—५।१४।४३।२५ − ०।१०।०।० = ५।४।४३।२५
१२ रा − ५।४।४३।२५ = २०५°।१६′।३५ = पिण्डादित्रिकायु सूर्य का अंशात्मक इसी प्रकार सभी ग्रहों का साधन होता है।

पिण्डादित्रिकायुबोधकचक्रम्

| सू० | चं० | मं० | बु० | बृ० | शु० | श० | ग्र० |
|---|---|---|---|---|---|---|---|
| २०५ | ३४१ | २८३ | ३४४ | २१५ | १६६ | ३०८ | अं० |
| १६ | ४ | १४ | २२ | ३८ | ४२ | १४ | क० |
| ३५ | २४ | २४ | १२ | ३८ | ५६ | २ | वि० |

अथ लग्ने पापग्रहे हानिमाह—

दायांशा द्युसदां पृथक् तनुलवादिघ्नाः खषट्त्र्युद्धृता
आप्त्योनास्तनुगे खले च यदि सद्दृष्टेऽर्धयाथापरे।
निघ्न्योग्रोदयभावजेन तनुगोग्रौ चेद्बलिष्ठस्य तत्
साम्ये पुष्टफलेन नेति तनुपेऽस्मिन्नोंशजेऽसौ क्रिया॥ २२॥

अन्वयः—खले तनुगे सति द्युसदां दायांशाः पृथक् स्थाप्याः। ते तनु-लवादिघ्नाः खषट्त्र्युद्धृताः आप्त्या ऊनाः। तनुगे खले सद्दृष्टे अर्धया ऊनाः। अथ अपरे उग्रोदयभावजेन निघ्न्याऽऽप्त्या दायांशा ऊनाः। तनुगोग्रौ चेद्बलिष्ठस्य भावजेन। तत्साम्ये पुष्टफलेन निघ्न्या दायांशा ऊनाः कार्या, इति न। अस्मिन् तनुपे अंशजे असौ क्रिया न कार्या।

व्याख्या—खले = पापग्रहे तनुगे = लग्नगते सति द्युसदां = खेच-राणां दायांशाः पूर्वोक्तानीतदायांशाः पृथक् स्थाप्याः। ते तनुलवादिघ्नाः= लग्नस्य राशीन् त्यक्त्वा अंशादिना गुणिताः खषट्त्र्युद्धृताः = षष्ट्य-धिकशतत्रयेण भक्ता आप्त्या = लब्धेन अंशादिना पृथक्स्था ऊनाः कार्याः। तनुगे खले सद्दृष्टे = शुभग्रहेणावलोकिते सति अर्धया = आप्तफलार्धेन

अंशादिना पृथक्स्था ऊनाः कार्या। अथानन्तरमपरे आचार्याः (झालुगिरामकृष्णादयः) उग्रोदयभावजेन = लग्नस्थपापग्रहस्य भावजेन फलेन निघ्न्या = गुणिता आप्त्या दायांशाः ऊनाः कार्याः। तनुगोग्रौ = लग्ने द्वौ पापौ यदि भवतस्तदा बलिष्ठस्य भावजफलेन निघ्न्या आप्त्या दायांशाः ऊनाः कार्याः। तत्साम्ये = बलसाम्ये, पुष्टफलेन = अधिकफलेन निघ्न्याऽऽप्त्या दायांशा ऊना कार्या इति कथयन्ति। इति न = इदं तन्मतं समीचीनं न। अथ लग्नस्थक्रूरे लग्नेशे इयं हानिः कार्या न वेत्याशंकायां आचार्यो कथयति "तनुपेऽस्मिन्निति" अस्मिन् = लग्नस्थक्रूरे तनुपे = लग्नेशे सति तथांशजे = अंशायुर्दायेऽसौ क्रिया नः कार्या इति।

उप०—"सार्धोदितोदितनवांशहतात्समस्ताद्
भागोऽष्टयुक्तशतसंख्य उपैति नाशम्।
क्रूरे विलग्नसहिते विधिनात्वनेन
सौम्येक्षिते दलमतः प्रलयं प्रयाति"॥ इति बृहज्जातकोक्तेः

क्रूरे लग्नगे सति हानिभागः=

$$\frac{\text{दायांश} \times \text{लग्ननवांश}}{१०८}$$

। अत्र "यदि त्रिंशदंशैर्नव नवांशा लभ्यन्ते तदेष्टलग्नांशादिभिः किमिति लग्ननवांशम् =

$$\frac{९ \times \text{लग्नांशादि}}{३०^\circ}$$

। अनेनोत्थापनेन जातो हानिभागः =

$$\frac{\text{दायांशः}}{१०८} \times \frac{९ \times \text{लग्नांशादिः}}{३०}$$

$$= \frac{\text{दायांशः} \times \text{लग्नांशादिः}}{३६०^\circ}$$

। अनेन हीना दायांशाः स्फुटा भवितुमर्हन्तीति। अन्ये आचार्यास्तु यदि रूपमितेन पूर्णं तद्भावफलेन इयं हानिस्तदेष्टभावफलेन किमित्यनुपातेन लब्धफलेन दायांशा ऊनाः कृतास्तन्न बहुसम्मतम्। शेषमागम एव प्रमाणम्।

हि० टी०—यदि लग्न में पापग्रह विद्यमान हो तो ग्रह के दायांश को पृथक् रखकर लग्न के राशि को छोड़कर शेष अंशादि से गुणा कर ३६० का भाग देने से जो लब्धि हो उसे पृथक् स्थित दायांश (पिण्डादि आयुर्दाय) में घटावे।

लग्नस्थ पापग्रह पर यदि शुभग्रह की दृष्टि हो तो लब्धि का आधा आयुर्भाग में घटाने पर पिण्डायु होती है। अन्य आचार्यों का मत है कि आगत लब्धि को लग्नस्थ पापग्रह के भावफल से गुणाकर दायांश में घटावे। शुभग्रह से यदि लग्नस्थ पापग्रह दृष्ट हो तो गुणनफल का आधा घटावे। लग्न में दो पापग्रह हो तो अधिक बलयुक्त पापग्रह के भावफल से गुणा करे। बल साम्य होने पर जिस ग्रह का भावफल अधिक हो उससे गुणा करे। यह अन्य आचार्यों का मत ग्राह्य नहीं है। लग्नगत लग्नेश ही यदि क्रूरग्रह हो तो दायांश में यह हानि नहीं होती है।

उदा०—लग्न में पापग्रह नहीं है। अतः हानि नहीं होगी।

अथ पिण्डनिसर्गजीवशर्मायुर्वर्षाद्यानयनम्—

गोऽब्जास्तत्त्वतिथिप्रभाकरतिथिस्वर्गा नखाः पैण्डजे
नैसर्गे नखभूद्विगोधृतिनखाः पञ्चाशदर्काद् गुणाः।
दायांशाः स्वगुणैर्हता हि भगणांशाप्ताः समाद्यायुषी
स्वर्गाप्ताश्च समादि जैवमिभहृत्स्वांशैर्घटीष्वन्वितम् ॥ २३ ॥

अन्वयः—अर्कात् गोऽब्जास्तत्त्वतिथिप्रभाकरतिथिस्वर्गा नखाः पैण्डजे गुणाः, नैसर्गे नखभूद्विगोधृतिनखाः पञ्चाशत् गुणाः स्युः। दायांशाः स्वगुणैर्हता भगणांशाप्ताः समाद्यायुषी भवतः। दायांशाः स्वर्गाप्ताः जैवम्, इभहृत्स्वांशैः घटीष्वन्वितं कार्यमिति।

व्याख्या–अर्कात्=सूर्यमारभ्य सप्तग्रहाणां क्रमात् गोऽब्जास्तत्त्वतिथिप्रभाकरतिथिस्वर्गानखाः पैण्डजे=पिण्डायुषि गुणाः स्युः। नैसर्गे=निसर्गायुषि नखभूद्विगोधृतिनखाः पञ्चाशत् क्रमेण सूर्यादिग्रहाणां गुणाः स्युः। पैण्डजे नैसर्गे च दायांशाः स्वगुणैर्हता भगणांशाप्ताः=षष्ट्युत्तरशतत्रयेण-भक्ताः लब्धफलतुल्ये समाद्यायुषी=वर्षाद्यायुषी भवतः। तथा दायांशाः स्वर्गाप्ताः=एकविंशतिभक्ता लब्धं जैवम्=जीवशर्मोक्तं समाद्यायुर्भवति। तदिभहृत्स्वांशैः=अष्टभक्तदायांशैर्घटीष्वन्वितं कार्यं तदा वास्तवं स्यात्।

उप—"नवतिथिविषयाश्विभूतरुद्रदश सहिता दशभिः स्वतुङ्गभेषु" इति पिण्डायुषि, "एकं द्वौ नव विंशतिर्धृतिकृती पञ्चाशदेषां क्रमाच्चन्द्रा-रेन्दुजशुक्रजीवदिनकृत्प्राभाकरीणां समाः" इति च नैसर्गे वृहज्जातकोक्ता-

न्यायुर्वर्षाणि गृहीतानि। "दायांशाः स्वगुणैर्हता हि भगणांशाप्ताः समाद्यायुषी" इत्यस्योपपत्ति एकविंशतितमश्लोकोपपत्तौ प्रदर्शिता। अथ जैवे युक्तिः—"स्वमतेन किलाह जीवशर्मा ग्रहदायं परमायुषः स्वरांशम्" इति बृहज्जातकवचनप्रामाण्यादुच्चस्थे ग्रहे परमायुषः सप्तमांश-तुल्यमायुः $= \dfrac{(\text{१२०।०।५।०।०})}{\text{७}}$। तत्र उच्चस्थे दायांशाः भगणांश-तुल्या। अत इष्टस्थानेऽनुपातो यदि "भगणांशतुल्यदायांशैः परमायुस्स सप्तमांशतुल्यमायुः प्रमाणं तदेष्टदायांशैः किमितीष्टदायांशसम्बन्धिआयुः प्रमाणम् =

$$\frac{(\text{१२०।०।५})}{\text{७}} \times \frac{\text{दायांश}}{\text{३६०}} = \frac{\text{१२०} \times \text{दायांश}}{\text{७} \times \text{३६०}} + \frac{\text{५} \times \text{दायांश}}{\text{७} \times \text{३६०}}$$

$$= \frac{\text{दायांश}}{\text{२१}} + \frac{\text{६०} \times \text{५} \times \text{दा०}}{\text{७} \times \text{३६०}} = \frac{\text{दायांश}}{\text{२१}} + \frac{\text{५} \times \text{दा०}}{\text{४२}} = \frac{\text{दायांश}}{\text{२१}} +$$

$\dfrac{\text{दायांश}}{\text{८}}$ स्वल्पान्तरात्। अत उपपन्नं जैवानयनम्।

हि० टी०—सूर्यादि सात ग्रहों के क्रम से (१६।२५।१५।१२।१५।२१।२०) ये पिण्डायु में गुणक होते हैं। २०, १, २, ६, १८, २०, ५० ये अंक क्रम से सूर्यादि सात ग्रहों के निसर्गायु में गुणक होते हैं। ग्रहों के दायांश को अपने गुणक से गुणा कर ३६० का भाग देने पर लब्धि वर्षादिक पिण्डायु और निसर्गायु होती है। जीवशर्मायु साधन में दायांश को २१ से भाग देने पर लब्धि वर्षादि जीवायु होती है। दायांश में ८ का भाग देने पर घट्यादि फल को वर्षादि जीवायु में जोड़ने पर वास्तव आयु प्रमाण होता है।

उदा०—पिण्डायुसाधन—

सूर्य—{ (२०५।१६।३५) × १६ } ÷ ३६० = १०।१०। ०।१५।५ वर्षादि
चन्द्र—{ (३४१। ४।२४) × २५ } ÷ ३६० = २३। ८।१३।४०। ० "
भौम—{ (२८३।१४।२४) × १५ } + ३६० = ११। ६।१८।३६। ० "
बुध—{ (३४४।२२।१२) × १२ } ÷ ३६० = ११। ५।२२।२६।२४ "
गुरु—{ (२१५।३८।३८) × १५ } ÷ ३६० = ८।११।२४।३६।३० "
शुक्र—{ (१६६।४२।५६) × २१ } ÷ ३६० = ११। ७।२४। १।३७ "
शनि—{ (३०८।१४। २) × २० } ÷ ३६० = १७। १।१४।४०।४० "
योग = ९१। २।२८।१९।१६ "

निसर्गायुसाधन—

सूर्य —{ (२०५।१६।३५) × २० } ÷ ६६० = ११। ४।२५।३१।४० वर्षादि

चन्द्र —{ (३४१। ४।२४) × १ } ÷ ३६० = ०।११।११। ४।२४ ”

भौम—{ (२८३।१४।२४) × २ } ÷ ३६० = १। ६।२६।२८।४८ ”

बुध —{ (३४४।२२।१२) × ६ } ÷ ३६० = ८। ७। ६।१६।४८ ”

गुरु —{ (२१५।३८।३८) × १८ } ÷ ३६० = १०। ६। ८।१५।२४ ”

शुक्र —{ (१६६।४२।५६) × २० } ÷ ३६० = ११। ०। ४।१८।४० ”

शनि— { (३०८।१४।२) × ५० } ÷ ३६० = ४२। ६।२१।४१।४० ”

योग = ८७। १।१६।४०।२४ ”

जीवशर्मायुसाधन—

सूर्य— (२०५।१६।३५) ÷ २१ = ६।६। ६। १।२५।४३ वर्षादि
(२०५।१६।३५) ÷ ८ = +२५।३६।३४ घट्यादि
= ६।६। ६।२७। ५।१७ स्फुटायु

चन्द्र— (३४१।४।२४) ÷ २१ = १६।२।२६।५८।१७। ६ वर्षादि
(३४१।४।२४) ÷ ८ = +४२।३८। ३ घट्यादि
= १६।२।२७।४०।५५।१२ स्फुटायु

भौम— (२८३।१४।२४) ÷ २१ = १३।५।२५।३२।३४।१७ वर्षादि
(२८३।१४।२४) ÷ ८ = +३५।२४।१८ घट्यादि
= १३।५।२६। ७।५८।३५ स्फुटायु

बुध— (३४४।२२।१२) ÷ २१ = १६।४।२३ २६। ८।३४ वर्षादि
(३४४।२२।१२) ÷ ८ = + ४३। २ ४६ घट्यादि
= १६।४।२४।१२।११।२० स्फुटायु

गुरु— (२१५।३८।३८) ÷ २१ = १०।३। ६।४५। ८।३४ वर्षादि
(२१५।३८।३८) ÷ ८ = +२६।५७।२० घट्यादि
= १०।३। ७।१२। ५।५४ स्फुटातु

शुक्र— (१६६।४२।५६) ÷ २१ = ६।६। ३।४१।४२।५१ वर्षादि
(१६९।४२।५६) ÷ ८ = +२४।५७।४२ घट्यादि



= ९।६। ४। ६।४०।४३ स्फुटायु

शनि—( ३०८।१४।२ ) ÷ २१ = १४।८।४। ०।३४।१७ वर्षादि

( ३०८।१४।२ ) ÷ ८ = + ३८।३१।४५ घट्यादि

= १४।८।४।३६। ६। २ स्फुटायु

## पिण्डायुर्वर्षाद्यम्

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | यो० |
|---|---|---|---|---|---|---|---|
| १० | २३ | ११ | ११ | ८ | ११ | १७ | ९५ |
| १० | ८ | ६ | ५ | ११ | ७ | १ | ६ |
| ० | १३ | १८ | २२ | २४ | २४ | १४ | २८ |
| १५ | ४० | ३६ | २६ | ३६ | १ | ४० | १६ |
| ५ | ० | ० | २४ | ३० | ३७ | ४० | १६ |

## निसर्गायुर्वर्षाद्यम्

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | यो० |
|---|---|---|---|---|---|---|---|
| ११ | ० | १ | ८ | १० | ११ | ४२ | ८७ |
| ४ | ११ | ६ | ७ | ९ | ० | ६ | १ |
| २५ | ११ | २३ | ६ | ८ | ४ | २१ | १६ |
| ३१ | ४ | २८ | १६ | १५ | १८ | ४१ | ४० |
| ४० | २४ | ४८ | ४८ | २४ | ४० | ४० | २४ |

## जीवायुर्वर्षाद्यम्

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | यो० |
|---|---|---|---|---|---|---|---|
| ६ | १६ | १३ | १६ | १० | ६ | १४ | ६० |
| ६ | २ | ५ | ४ | ३ | ६ | ८ | ४ |
| ६ | २७ | २६ | २४ | ७ | ४ | ४ | १३ |
| २७ | ४० | ७ | १२ | १२ | ६ | ३६ | २६ |
| ५ | ५५ | ५८ | ११ | ५ | ४० | ६ | ३ |
| १७ | १२ | ३५ | २० | ५४ | ४३ | २ | ३ |

अथ सिद्धेषु पिण्डादित्रिषु लग्नायुरानयनमाह—

स्याल्लिप्ताः खनखोद्धृता विभतनोर्वर्षादि पैण्डत्रिके
लग्नायुर्निखिलैस्तदंशकसमं कैश्चिद्भतुल्यं स्मृतम् ।
यस्येशोऽधिबलस्तदेव हि परैस्तेनाढ्यमन्यैर्यदं-
शायुर्वत्त्वथ चांशतुल्यमखिलोक्तं ग्राह्यमेवादिमम् ॥ २४ ॥

अन्वयः—विभतनोः लिप्ताः खनखोद्धृताः पैण्डत्रिके लग्नायुः स्यात् । तदंशकसमं निखिलैः स्मृतम् । कैश्चिद्भतुल्यं स्मृतम् । परैः यस्येशोऽधिबलस्तदेव स्मृतम् । अन्यैरंशायुर्वत् तेनाढ्यम् । अथ चांशतुल्यमखिलोक्तं आदिममेव ग्राह्यम् ।

व्याख्या—विभतनोः = राशीन् विहाय लग्नस्य लिप्ताः = कलाः खनखोद्धृताः = शतद्वयभक्ताः लब्धं पैण्डत्रिके = पिण्डादित्रिके लग्नायुः स्यात् । तदंशकसमं निखिलैः = सर्वाचार्यैः स्मृतम् । कैश्चिद्भतुल्यम् = लग्नभुक्तराशितुल्यं स्मृतम् । परैर्यस्येशो बली तदेव स्मृतम् । अन्यैरंशायुर्वत् यदायुस्तत्तेन आढ्यम् = युक्तं कार्यमिति । अथ चांशतुल्यमिदमखिलोक्तमादिममेव ग्राह्यम् ।

उप०—"होरात्वंशप्रतिमम्" आयुर्ददातीति वराहमिहिरोक्तेः लग्नभुक्तनवांशतुल्यमायुः सिध्यति । अतोऽनुपातो यदि शतद्वयकलाभिरेको नवांशस्तदेष्टलग्नांशकलाभिः क इति लग्ननवांशसंख्या $= \frac{\text{लग्नकलाः} \times 1}{200}$ । पुनरनुपातो यदि एकनवांशेनैकं वर्षं तदा लग्ननवांशैः किमिति लग्नायुः $= \frac{1 \times \text{लग्नकलाः}}{1 \times 200} = \frac{\text{लग्नकलाः}}{1 \times 200}$ ॥ अन्यत् सर्वं आगममूलत्वात्स्पष्टमेव ।

हि० टी०—लग्न की राशि को छोड़कर लग्न के अंशादि को कला बनाकर २०० का भाग देने से लब्धि पिण्डादि त्रिक में लग्न की आयु होती है । इस अंशायु में किसी आचार्य का मतभेद नहीं है । कोई आचार्य लग्नभुक्तराशितुल्य लग्नायु कहते हैं । कोई राशीश और अंशेश में जो अधिक बली हो उसी के तुल्य लग्नायु कहते हैं । किसी आचार्य के मत से अंशायु साधन की विधि से आयुर्दाय साधन कर उसमें राशीश बली हो तो राशि तुल्य और यदि

अंशेश बली हो तो नवांश तुल्य वर्ष जोड़ने से लग्नायु मानते हैं। इनमें अंशायु-तुल्य आयु में सभी आचार्यों में एकवाक्यता है। अतः अंशायु ही ग्रहण करनी चाहिए।

उदा०—लग्न का भुक्त अंशादि १४।१२।३० = ८५२'।३०। (८५२'।३०) ÷ २०० = ४।४।४।३० पिण्डादित्रिक में लग्न का वर्षादि आयुमान।

अथ चतुर्णामायुषां कतमं कदा ग्राह्यमिति शङ्कां परिहरन्नाह—

अंशायुश्च तनाविनेऽधिकबले पैण्डं निसर्गं विधौ
स्याच्चेत्तुल्यबलं द्वयोर्युतिदलं तज्जायुषोश्चेत्त्रयः।
त्र्यायुंषि त्रिबलैर्निहत्य च युतिर्वीर्यैक्यहृद्वा त्रिजा-
युर्युत्यास्त्रिलवोऽथ जैवमुदितं चेद्धीनवीर्यास्त्रयः॥ २५॥

अन्वयः—तनौ अधिकबले अंशायुः, इने अधिकबले पैण्डम्, विधौ अधिकबले निसर्गम्। चेद्द्वयोस्तुल्यबलं तज्जायुषोर्युतिदलम्, चेत्त्रयस्तदा त्र्यायुंषि त्रिबलैर्निहत्य युतिर्वीर्यैक्यहृत् वा त्रिजायुर्युत्यास्त्रिलवो आयुर्भवति। अथ त्रयो हीनवीर्याश्चेत् जैवमुदितम्।

व्याख्या—तनौ = लग्ने, अधिकबलेंऽशायुः साध्यम्। इने = सूर्ये अधिकबले पैण्डं = पिण्डायुः, तथा विधौ = चन्द्रे अधिकबले निसर्गं = नैसर्गिकमायुः साध्यम्। चेद्द्वयोः = लग्नरविचन्द्राणामन्यतमयोर्द्वयोस्तुल्यबलं = समानबलं तदा तज्जायुषोर्युतिदलं ग्राह्यम्। चेत्त्रयः समबलास्तदा त्र्यायुंषि त्रिबलैर्निहत्य युतिः = तेषां योगः, वीर्यैक्यहृत् तदायुर्भवति। वा = अथवा त्रिजायुर्युत्यास्त्रिलवः = तृतीयांश आयुर्भवति। अथ चेत्त्रयो हीनवीर्यास्तदा जैवम् = जीवशर्मोक्तमायुरुदितम् = कथितमिति।

अत्रयुक्तिः—आयुर्विषये सारावल्यामुक्तम्। तद्यथा—

"अंशोद्भवं विलग्नात् पैण्डं भानोर्निसर्गजं चन्द्रात्।
एतेषां यो बलवानेकतमं तस्य चिन्तयेदायुः॥
लग्नदिवाकरचन्द्रास्त्रयोऽपि बलरिक्ततां यदा यान्ति।
परमायुषः स्वरांशं ददति खगा जीवशर्मोक्तम्"॥ इति

वचनप्रामाण्याद् बलद्वयेन आयुर्द्वये प्राप्ते आयुर्द्वययोगार्धं ग्राह्यमिति समुचितम्। परन्त्वत्र तत्तद्बलवशात् द्वयोर्बलयोरेकाकारतायां प्राप्ते

तदायुषोऽर्धमयुक्तम्, विलक्षणयोर्द्वयोर्बलयोरेकाकारता योगार्धमेव ग्राह्यम्। अतस्तदानयनार्थमनुपातो यदि बलद्वययोगार्धेनैतदायुषोरर्धमायुः प्रमाणं लभ्यते तदायुः प्रापकैतद्बलेन किमिति ?

$$= \frac{\text{आ०}}{२} \times \frac{\text{इ० ब०}}{\text{ब० यो द०}} = \frac{\text{आ०} \times \text{इ० ब०}}{\text{ब० यो०}}$$

एवं द्वितीयस्य $\frac{\text{अ}_१ \times \text{इ०ब}_१}{\text{ब० यो०}}$। अनयोर्योगः

$$= \frac{\text{आ०} \times \text{इ० ब०} + \text{आ}_१ \times \text{इ० ब०}_१}{\text{ब० यो०}} = \text{स्फुटायुः}।$$

एवं त्रिषु तुल्यबलेषु तत्तदायुस्तत्तद्बलेन संगुण्य तद्योगं बलत्रययोगेन भजेल्लब्धं मिश्रायुः स्यादिति।

हि० टी०—सूर्य चन्द्र और लग्न में लग्न अधिक बलवान् हो तो अंशायुः, सूर्य अधिक बलवान् हो तो पिण्डायुः और चन्द्र अधिक बलवान् हो तो निसर्गायुः ग्रहण होता है। यदि दो का बल तुल्य हो तो दोनों का आयुसाधन कर आयु के योग का आधा ग्रहण होता है। अर्थात् यदि लग्न और रवि तुल्य बली हों तो अंशायु और पिण्डायु के योगार्ध, यदि रवि चन्द्र तुल्य बली हों तो पिण्डायु और निसर्गायु का योगार्द्ध, यदि लग्न और चन्द्र तुल्यबली हों तो अंशायु और निसर्गायु का योगार्ध ग्रहण करे। यदि तीनों लग्न, रवि और चन्द्र तुल्य बली हों तो तीनों अंशायु, पिण्डायु और निसर्गायु को अपने-अपने बल से गुणाकर गुणनफल के योग में तीनों के बलों के योग से भाग देने पर जो लब्धि हो, अथवा तीनों आयु के योग का तृतीयांश आयु ग्रहण होता है। तीनों हीनबली हों तो जीवशर्मोक्त आयु ग्रहण करना चाहिए। बल की तुल्यता में यदि दोनों अधिक बली हों अथवा दोनों मध्यबली हों तो तुल्यबल समझना चाहिए।

अथ हीनबलत्वादिलक्षणं तथांशायुषो बहुसम्मतत्वं तथा केषामिदमायुर्घटत इत्याह—

त्र्यल्पे हीनबलो बली षडधिके वीर्यें ग्रहश्चोदयो
भिन्नं स्वस्वमते स्मृतायुरिति यत्प्राज्ञैर्व्यवस्थापितम्।
अंशायुर्बहुसम्मतं भवति यत्सत्यं च सत्योदितं
स्याद्धर्मिष्ठसुशीलपथ्यसुभुजां न स्यादिदं पापिनाम् ॥२६॥

अन्वयः—त्र्यल्पे वीर्ये ग्रहः उदयश्च हीनबलः स्यात्, षडधिके वीर्ये बली, इति स्मृतायुः प्राज्ञैः स्वस्वमते भिन्नं यद् व्यवस्थापितं सत्योदितं अंशायुर्बहुसम्मतं स्यात्। इदं धर्मिष्ठसुशीलपथ्यसुभुजां सत्यं स्यात्, पापिनां न।

व्याख्या—त्र्यल्पे = रूपत्रयाल्पे वीर्ये = बलयुक्ते, ग्रह उदयश्च = खेचरः लग्नं च हीनबलः = हीनबलसंज्ञकः स्यात्। षडधिके रूपषडधिके वीर्ये बली स्यात्। त्र्यधिके षडल्पे च वीर्ये मध्यबलीति अर्थत एव सिध्यति। इति स्मृतायुः प्राज्ञैः = बुद्धिमद्भिः, स्वस्वमते भिन्नं यद् व्यवस्थापितम् = प्रतिपादितम्, तत्र सत्योदितं = सत्याचार्योक्तमंशायुर्बहुसम्मतं स्यात्। इदमायुः धर्मिष्ठसुशीलपथ्यसुभुजां जनानां सत्यं स्यात्। पापिनां प्राणिनां नेति।

अत्रयुक्तिः—षडेव सन्ति बलानि। तत्र पूर्णात्मकं यदि सन्ति प्रत्येकं तर्हि षड्रूपाणि बलानि भवन्ति। अतः षड्रूपबलवान् बली स्यादेव। षड्रूपाणामर्धं रूपत्रयपर्यन्तं मध्यबलः, रूपत्रयतोऽल्पे बले हीनबलत्वमित्यपि युक्तियुक्तमेव। पापकर्मणा आयुषो हानिर्भवतीति कृत्वा स्वधर्मनिष्ठेष्वेव साधितायुर्घटत इत्यपि युक्तियुक्तमेव।

हि० टी०—लग्न अथवा ग्रहों का बल यदि ६ से अधिक हो तो बली, यदि ३ से अल्प हो तो हीनबली और यदि ३ और ६ के मध्य हो तो मध्यबली होता है। पूर्वोक्त चतुर्विध आयु विभिन्न आचार्य अपने-अपने मत से प्रतिपादित किये हैं। इन सभी आचार्यों में सत्याचार्योक्त अंशायु बहुसम्मत होने से ग्राह्य है। यह आयु धर्मिष्ठ, सुशील, सुपथ्य भोजनादि करने वाले प्राणियों को ही प्राप्त होती है। पापियों को यह आयु प्राप्त नहीं होती।

उदा०—स्पष्टम्।

अथ शिष्यसन्देहनिराकरणार्थमाह—

हानिर्यास्तमितेऽरिभेऽप्यनुमतांऽशोत्थेऽल्पबुद्ध्या न तद्
यस्माच्चैष्टिक आश्रयेऽस्ति निखिलैः पिण्डादिषूक्ता ततः।
आयुः सौरमिदं यतोऽब्दगणना सौरात्ततः सूरिभिः
प्रोक्तं सत्यमसद्यदल्पकथितं नाक्षत्रकं सावनम्॥ २७॥

अन्वयः—अस्तमितेऽरिभे या हानिः अंशोत्थेऽल्पबुद्ध्याऽनुमता

तन्न। यस्मात् चैष्टिक आश्रयेऽस्ति, ततो निखिलैः पिण्डादिषूक्ता। इदमायुः सौरं स्यात्। यतोऽब्दगणना सौराद् भवति। ततः सूरिभिः प्रोक्तं सौरं सत्। अल्पकथितं नाक्षत्रकं सावनं न सदिति।

व्याख्या—अस्तमितेऽरिभे च ग्रहे या हानिः = स्वोच्चोनो द्युचरे-त्यादिना प्रतिपादिता सा केनचिदाचार्येण अंशोत्थे अंशायुर्दायेऽल्प-बुद्ध्याऽनुमता = स्वीकृता, तन्न = तन्मतं समीचीनं न। यस्मात् सा हानिः चैष्टिक आश्रये=चेष्टागुणके आश्रयगुणके चास्ति। ततो निखिलैः= सर्वैः पिण्डादिषूक्ता न चांशायुषि। इदमायुः सौरं = सौरमानेन स्यात्। अब्दगणना तु सौरमानेनैव जायते। उक्तञ्च भास्करेण—"वर्षायनर्तु-युगपूर्वकमत्र सौरात्" इति। ततः सूरिभिःप्रोक्तं यत्सौरं तत्सत्। अल्पकथितं यन्नाक्षत्रकं सावनं वा तदसदिति।

उपपत्तिरत्र सुगमागममूलैव।

हि० टी०—ग्रह यदि अस्त हो तो अर्धहानि और शत्रु के गृह में जो त्र्यंश-हानि प्रतिपादित है, उसको कोई अल्पज्ञ अंशायु में भी प्रतिपादित किये हैं, किन्तु यह उचित नहीं है। क्योंकि अर्धहानि और त्र्यंशहानि चेष्टागुणक और आश्रय-गुणक में है। इसीलिये सभी आचार्य हानि को पिण्डादित्रिकायु में हीं प्रतिपादित किये हैं, अंशायु में नहीं। आयु की गणना सौरमान से ही होती है, क्योंकि वर्ष की गणना सौरमान से ही होती है। इसलिये जो आचार्य सौरमान से आयु प्रतिपादित किये हैं वह सत्य ( ग्राह्य ) है। जो आचार्य नाक्षत्र अथवा सावनमान से आयु की गणना किये हैं वह असत् ( ग्राह्य नहीं ) है।

अथ प्राणिनां परमायुः पुरस्सरं मनुष्येतरायुरानयनमाह—

पञ्चाहं नखभूसमा नृकरिणां व्याघ्राद्यजादेर्नृपा
गोकाल्योश्च जिनास्तथोष्ट्रखरयोस्तत्त्वानि सूर्याः शुनाम्।
अश्वायुः परमं रदा नृवदिहानीयायुरेषां परा-
युर्निघ्नं नृपरायुषा च विहृतं तेषां स्फुटायुर्भवेत्॥ २८॥

अन्वयः—पञ्चाहं नखभूसमाः नृकरिणां परममायुः, व्याघ्राद्यजादे-र्नृपाः, गोकाल्योः जिना, तथोष्ट्रखरयोः तत्त्वानि शुनां सूर्याः, अश्वायुः रदाः परमायुः स्मृतम्। इहैषां नृवदायुरानीय तेषां परायुर्निघ्नं नृपरायुषा विहृतं तेषां स्फुटायुर्भवेत्।

व्याख्या—पञ्चाहं नखभूसमाः = पञ्चदिनाधिकविंशत्युत्तरशतवर्षाणि नृकरिणां = मनुष्याणां गजानां च परममायुः स्मृतम्। व्याघ्राद्यजादेर्नृपाः षोडशवर्षाणि, गोकाल्योः = गोमहिष्योः, जिनाः = चतुर्विंशतिवर्षाणि, तथोष्ट्रखरयोः तत्त्वानि = पञ्चविंशतिवर्षाणि, शुनां = अश्वानां सूर्याः = द्वादश वर्षाणि अश्वायुः परमं रदाः = द्वात्रिंशत् समा वर्षाणि परमायुः स्मृतम्। इहैषां = व्याघ्रादीनां, नृवत् = मनुष्यायुः साधनवदायुः संसाध्य तेषां परायुर्निघ्नं नृपरायुषा विहृतं यल्लब्धं तत्तेषां स्फुटायुर्भवेदिति।

उप०—परायुषि प्रत्यक्षोपलब्धिरेवासना। तत्र सर्वेषामायुः संसाध्य अनुपातेन स्फुटायुर्भवति। तद्यथानुपातः—यदि मनुष्यपरमायुषा मनुष्यवदानीतमश्वादीनामायुर्लभ्यते तदा स्वस्वपरमायुषा किमिति तत्तत्स्फुटायुः स्यादेवेत्युपपन्नम्।

हि० टी०—मनुष्य और हस्ती की परमायुः एक सौ बीस वर्ष पाँच दिन (१२० वर्ष, ५ दिन), व्याघ्र और भेड़ा की परमायुः १६ वर्ष, गौ तथा भैंस की परमायुः २४ वर्ष, ऊँट और गर्दभ की परमायुः २५ वर्ष, कुत्ता की आयुः १२ वर्ष तथा अश्व की परमायु ३२ वर्ष होती है। व्याघ्रादिकों की आयु मनुष्यवत् साधन कर उसको अपनी अपनी परमायु से गुणा कर मनुष्य की परमायु से भाग देने पर लब्धि वर्षादि अपनी २ स्फुटायु होती है।

व्याख्या से ही उदाहरण स्पष्ट है।

## अथ दशाध्यायः

तत्र दशास्वरूपं तच्छुभाशुभफलञ्चाह—

यस्यायुर्यदसौ दशास्य च शुभेष्टोच्चस्वभांशे तथा-
ऽऽरोहा नीचपरिच्युतस्य यदि सा कष्टारिनीचांशभे।
त्यक्तोच्चे त्ववरोहिणी भवति सा मध्योच्चमित्रस्वभां-
शे सद्दृष्टयुतस्फुरत्करवलिष्ठेष्टाधिके स्याच्छुभा ॥ २९ ॥

अन्वयः—यस्य यद् आयुः असौ अस्य दशा भवति। इष्टोच्चस्वभांशे दशा शुभा भवति। तथा नीचपरिच्युतस्य दशा आरोहा भवति। यदि अरिनीचांशभे च तदा सा आरोहा दशा कष्टा स्यात्। त्यक्तोच्चे

मित्रस्वभांशे तु सावरोहिणी दशा मध्या। सद्दृष्टयुतस्फुरत्करबलिष्ठेष्टाधिके त्यक्तोच्चे सावरोहिणी दशा शुभा स्यात्।

व्याख्या—यस्य ग्रहस्य यदायुरसौ अस्य ग्रहस्य दशा भवति। इष्टोच्चस्वभांशे = मित्रस्य उच्चस्य स्वस्य वा नवमांशे राशौ नवांशे वा स्थितस्य ग्रहस्य दशा शुभा स्यात्। तथा नीचपरिच्युतस्य ग्रहस्य दशा आरोहा शुभफलदा भवति। यदि नीचपरिच्युतो ग्रहोऽरिनीचांशभे स्थितस्तदा सा अरोहा दशा कष्टा = कष्टफलदा स्यात्। त्यक्तोच्चे ग्रहे मित्रस्वभांशे स्थिते सति सावरोहादशा मध्या = मिश्रफलदा भवति। सद्दृष्टयुतस्फुरत्करबलिष्ठेष्टाधिके त्यक्तोच्चे ग्रहे सति सावरोहिणी दशा शुभा = शुभफलदा स्यात्।

उप०—उपपत्तिरत्र सुगमागममूलैव।

हि० टी०—जिस ग्रह की जो आयु है वही उस ग्रह की दशा है। यदि ग्रह मित्र की राशि, मित्र का नवांश अथवा स्वराशि, स्वनवांश, अपनी उच्चराशि अथवा उच्चराशि के नवांश में स्थित हो तो दशा शुभफलदातृ होवी है। ग्रह यदि नीच राशि को त्यागकर उच्चगामी हो तो ( उच्चाभिमुख होने से ) उसकी दशा आरोहिणी ( शुभफल देनेवाली ) होती है। यदि ग्रह नीचराशि को छोड़कर उच्चगामी हो परन्तु शत्रु की राशि अथवा नीचराशि के नवांश में हो तो आरोहा दशा भी अशुभ फल देने वाली होती है। ग्रह यदि उच्चराशि को छोड़कर नीचराशिगामी हो तो उसकी दशा अवरोहिणी (अशुभफल देने वाली) होती है। यदि ग्रह नीचराशिगामी होकर उच्च राशि के नवांश, मित्र की राशि नवांश अथवा स्वराशि नवांश में स्थित हो तो मिश्रफल देने वाली होती है। यदि नीचगामी ग्रह शुभग्रह से युत या दृष्ट हो अथवा देदीप्यमान किरणवाला-एवं उसका इष्ट अधिक हो तो अवरोहिणी दशा भी शुभफल देने वाली होती है।

अथ दशाक्रममाह—

स्यादाद्या हि दशाधिकौजस इहाङ्गार्काब्जकानां तत-
स्तत्केन्द्रादियुजामथ द्विबहवो वीर्यक्रमेणैव हि।
चेदोजः समतायुषोधिकतयायुस्तुल्यता चेद्दशा

मौढ्यात् स्यादुदितक्रमात्क्रमविधौ वीर्यं हि तत्रोच्यते ॥२०॥

अन्वयः—इह अङ्गार्काब्जकानां अधिकौजसः आद्या दशा स्यात्। ओजसः समता चेत् आयुषोऽधिकतया आद्या दशा स्यात्। ततः तत्केन्द्रादियुजां दशा स्यात्। चेत् द्विबहवः वीर्यक्रमेणैव दशा स्यात्। आयुस्तुल्यता चेत् मौढ्यात् उदितक्रमात् दशा स्यात्। तत्र क्रमविधौ वीर्यं उच्यते।

व्याख्या—इह = अत्र दशाक्रमवर्णने अङ्गार्काब्जकानां = लग्नरविचन्द्राणां मध्ये अधिकौजसः = अधिकबलयुक्तस्य आद्या = प्रथमा दशा स्यात्। लग्नार्कचन्द्राणां द्वयोस्त्रयाणां वा तदोजः समता = बलतुल्यता चेत्तदाऽऽयुषोधिकतया = यस्यायुर्वर्षाण्यधिकानि तस्य ग्रहस्य आद्या दशा स्यात्। आयुस्तुल्यता चेत् तदा पूर्वपठितक्रमेणैवाद्या दशा ज्ञेया। यथा—लग्नार्कयोर्बलायुषोः साम्ये संजाते सति पूर्वपठितत्वाल्लग्नस्याद्या दशा, एवं लग्नचन्द्रयोर्मध्येऽप्याद्या दशा लग्नस्यैव। सूर्यचन्द्रमसोर्बलायुषोः साम्ये सूर्यस्यैवाद्या दशा स्यात्। ततोऽनन्तरं तत्केन्द्रादियुजां लग्नार्कचन्द्राणां यस्याद्या दशा तस्मात् केन्द्रपणफरापोक्लिमस्थानां ग्रहाणां दशाः स्युः। इह केन्द्रादौ चेद् द्विबहवः = द्वित्र्याद्यो ग्रहाः भवेयुस्तदा वीर्यक्रमेणैव दशा स्यात्। चेदोजः समता तदा आयुषोऽधिकतया दशा स्यात्। चेदायुस्तुल्यता स्यात्तदा मौढ्यात् = सूर्यसान्निध्येनास्तमयात् उदितक्रमात् दशा स्यात्। तत्र क्रमविधौ वीर्यं = बलमुच्यते = कथ्यते।

हि० टी०—लग्न सूर्य और चन्द्र में जो अधिक बली हो उसकी प्रथम दशा होती है। लग्न, सूर्य और चन्द्र में दो अथवा तीनों समान बली हो तो जिसका दशावर्ष अधिक हो उसकी दशा प्रथम होती है। दशा वर्ष में समता रहने पर श्लोक में प्रथम पठित की प्रथम दशा होगी। इस प्रकार लग्न, सूर्य और चन्द्र में जिसकी प्रथम दशा हो उससे केन्द्रस्थित ग्रह की दशा द्वितीयादि तथा केन्द्रस्थित ग्रहों की दशा के पश्चात् पणफर स्थान स्थित ग्रहों की दशा तथा पणफर स्थित ग्रहों की दशा के बाद आपोक्लिम स्थान स्थित ग्रहों की दशा होती है। यदि इन स्थानों में भी दो या अधिक ग्रह हों तो उनमें अधिकबली ग्रह की दशा प्रथम होती है। यदि बल में तुल्यता हो तो जिस ग्रह का दशा वर्ष अधिक हो उस ग्रह की प्रथमा दशा होती है। यदि दशा वर्ष में भी समता हो तो सूर्यसान्निध्य से अस्त होकर जिस ग्रह का प्रथम उदय हुआ हो उस ग्रह की प्रथमा दशा होती है।

अथ दशाक्रमबलं रिष्टकररिष्टहरबलञ्चाह—

चेल्लग्नाद्यदशा स्वभावजफलघ्नौजांसि पाकक्रमे-
ऽर्केन्द्वोश्चेत्प्रथमा खगोदयबलाङ्घ्रिर्भेऽन्यवर्गेऽर्धितः।
स्वैर्वर्गेशबलैर्हता बलमिहैक्यं मूलितैक्यं परे-
ऽथैवं रिष्टदभङ्क्तृजे बहुबलो भङ्क्ता तदा रिष्टहृत् ॥३१॥

अन्वयः – चेत् लग्नाद्यदशा तदा स्वभावजफलघ्नौजांसि पाकक्रमे बलानि, अर्केन्द्वोः प्रथमा दशा चेत् तदा खगोदयबलांघ्रिः भे अन्यवर्गे अर्धितः। ते स्वैर्वर्गेशबलैर्हता ऐक्यं इह बलं भवति। परे मूलितैक्यं बलम्, अथैवं रिष्टदभङ्क्तृजे भङ्क्ता बहुबलो रिष्टहृद्भवति।

व्याख्या—चेत् = यदि लग्नाद्यदशा = लग्नस्य प्रथमा दशा स्यात्तदा स्वभावजफलाघ्नौजांसि = पूर्वसाधितस्वभावफलेन गुणितानि षड्बलैक्यानि, पाकक्रमे = दशाक्रमे बलानि भवन्ति। चेदर्केन्द्वोः प्रथमा दशा स्यात् तदा खगोदयबलाङ्घ्रिः = ग्रहाणां लग्नस्य च षड्बलैक्यचतुर्थांशः भे = गृहे स्थाप्यः। अन्यवर्गे = होरादौ स चतुर्थांशोऽर्धितः स्थाप्यः। ते स्थापिताङ्काः स्वैर्वर्गेशबलैर्हतास्तेषां ऐक्यं इह पाकक्रमे बलं स्यात्। परे = अन्ये मूलितैक्यं = मूलितञ्च तदैक्यमितिबलं कथयन्ति। अथैवं रिष्टदभङ्क्तृजे = रिष्टकररिष्टहरयोर्बले साम्ये तत्र भङ्क्ता = रिष्टभङ्क्ता चेद् बहुबलयुक्तस्तदा रिष्टहृत् = रिष्टविनाशको भवति।

उप०—समभावफलेषु सर्वेषु ग्रहेषु यस्य ग्रहस्य बलमधिकं तस्य ग्रहस्य दशाक्रमविचारे प्रथमादशा भवति। ततस्तदल्पबलस्य ग्रहस्य दशेति यथास्थानस्थितबलेन निर्णयो भवति। तत्र समभावफलं रूपतुल्यमिति मत्वाऽनुपातो यदि सकलग्रहाणां रूपतुल्ये समभावफले ग्रहस्थे तद्बलतुल्यं बलं लभ्यते तदेष्टभावफले किमिति लब्धं दशाक्रमबलम् =

$$\frac{\text{ग्र० ब०} \times \text{इ० भा० फ०}}{१}$$ ।

अथ रविचन्द्रयोश्चेदाद्या दशा तदा तत्र "होरादिवर्गाद् द्विगुणं गृहं यत्" इति वचनात् गृहस्य द्विवर्गात्मकत्वादष्टौ तुल्यवर्गास्तत्र रिष्टकररिष्टहरयोर्ग्रहयोर्बलं अष्टसु स्थानेषु स्थाप्यमत्र गृहसम्बन्धिस्थानद्वयम्, होरादिसम्बन्धिकञ्च स्थानषट्कम्। अथात्र सुलभार्थमेकक्रमलाभाय अष्टतुल्यं

समबलमिति प्रकल्प्यानुपातो यदि गृहेशस्याष्टतुल्ये समबले राशिस्थ-ग्रहोदयबलतुल्यं बलं लभ्यते तदेष्टराशीशबले किमिति दशाक्रमबलम् = $\frac{\text{ग्रहोदयबल} \times \text{राशीशबल}}{८}$ । इदं द्विगुणितं राशिस्थानीयबलम् =

$\frac{\text{ग्रहोदयबल} \times \text{राशीशबल}}{४}$ । गृहाद् होरादेरर्धमितत्वा"दन्यवर्गेऽर्धितः" इत्युक्तम् । तत्रैतेषामैक्यं सर्वबलमपि युक्तियुक्तमेव । तथा च सर्वबलस्य मूलग्रहणे न क्वापि हानिरिति । यत्तु मूलितानामैक्यं बलमिति-कैश्चिद्व्याख्यातं तन्निर्मूलत्वादसङ्गतमिति विबुधैर्विभाव्यम् । शेषं स्पष्टम् ।

हि० टी०—यदि लग्न की प्रथमा दशा हो तो अपने-अपने भावफल से ग्रह के षड्बलैक्य को गुणा करने पर दशाक्रम में बल सिद्ध होता है। यदि सूर्य अथवा चन्द्र की प्रथमा दशा हो तो ग्रह तथा लग्न के षड्बलैक्य का चतुर्थांश गृहस्थान से स्थापित करना। पुनः गृहस्थापित बल का आधा होरादि स्थानों में स्थापित करना। सभी स्थापित बलों को अपने वर्गेश के बल से गुणा कर सबका योग करने पर दशाक्रम में बल होता है। किसी २ आचार्य के मत में योग का मूल दशा में बल तथा किसी आचार्य के मत में पृथक् २ सबका मूल लेकर योग करने पर दशाक्रम में बल होता है। किन्तु यह असङ्गत है।

अतएव सबका योग अथवा सबके योग का मूल ही वास्तविक बल ग्रहण करना चाहिये। इस प्रकार रिष्टकर एवं रिष्टहर दोनों ग्रहों का बल साधन करना चाहिये। यदि रिष्टहर ग्रह का बल अधिक हो तो रिष्टभङ्ग करता है।

अथ रिष्टकररिष्टहरग्रहयोर्बलसाम्ये निर्णयमाह—

भङ्क्तू रिष्टकृतो हिताहितशुभासत्त्वं च नीचोच्चभा-
स्ताद्यस्याश्रयतां विचार्य मतिमान् रिष्टस्य भङ्गं भदेत् ।
श्रेष्ठं रिष्टहृतौ दशाक्रम इहौजः श्रीधराद्योदितं
कष्टेष्टघ्नबलान्तरात्क्व च कृतं तद्युक्तिशून्यं त्वसत् ॥ ३२ ॥

अन्वयः—भङ्क्तू रिष्टकृतः हिताहितशुभासत्त्वं च नीचोच्चभास्ताद्यस्य आश्रयतां विचार्य मतिमान् रिष्टस्य भङ्गं भदेत् । इह रिष्टहृतौ दशाक्रमे श्रीधराद्योदितमोजः श्रेष्ठम् । क्व च कष्टेष्टघ्नबलान्तरात् कृतं तद्युक्तिशून्यमसच्च ।

व्याख्या—भङ्क्तु = रिष्टभङ्गकरस्य, रिष्टकृतः = रिष्टकरस्य चेति ग्रहद्वयस्यापि हिताहितशुभासत्त्वं = हितमिष्टमहितं कष्टं च पुनर्नीचोच्च-भास्ताद्यस्य = सकलस्याप्याश्रयतां विचार्य मतिमान् रिष्टस्य भङ्गं भदेत् = वदेत् । इह = अत्र रिष्टहृतौ दशाक्रमे श्रीधराद्योदितमोजः = बलं श्रेष्ठम् । क्व च = कुत्रापि ( श्रीपत्यादिपद्धतौ ) कष्टेष्टघ्नबलान्तरात् दशाक्रमबलं कृतं तद् युक्तिशून्यमसच्चेति ज्ञेयमिति ।

उप०—उपपत्तिरत्र सरला ।

हि० टी०—रिष्टकर और रिष्टहर ग्रहों के इष्ट, कष्ट, शुभत्व, अशुभत्व, नीच, उच्च, अस्त आदि अर्थात् मूलत्रिकोण, अधिमित्र, मित्र, सम, शत्रु, अधिशत्रु की राशि और जय, पराजय के आश्रयत्व विचार कर बुद्धिमान् रिष्टभङ्ग निर्णय करे। रिष्टभङ्ग और दशाक्रम श्रीधराचार्यादि द्वारा प्रतिपादित बल श्रेष्ठ है। श्रीपत्यादि किसी २ आचार्यों के द्वारा कष्ट इष्ट से गुणित षड्बलैक्य के अन्तर पर से प्रतिपादित बल युक्तिशून्य और असत् है।

अथान्तर्दशाक्रममाह—

**अर्धस्यैकभगस्त्रिकोणगृहगस्त्र्यंशस्य चास्ते नगां-**
**शस्यांघ्रेश्चतुरस्रगौ निजगुणैः पक्तैकभे स्याद्बली ।**
**अंशादौ कुरु रूपमत्र समतां कृत्वा च नाशं छिदा-**
**मंशघ्नः स्वदशाः पृथक् खलु लवैक्याप्ताः स्युरन्तर्दशा ॥२३॥**

अन्वयः—एकभगः अर्धस्य निजगुणैः पक्ता भवति । त्रिकोणगृहगः त्र्यंशस्य अस्ते नगांशस्य चतुरस्रगः अङ्घ्रेः पक्ता भवति । एकभे ग्रहाश्चेत्तदा बली पक्ता भवति । अंशादौ रूपं कुरु, च छिदां समतां कृत्वा नाशं कुरु । ततः स्वदशाः पृथक् अंशघ्नाः लवैक्याप्ताः अन्तर्दशाः स्युः ।

व्याख्या—एकभगः = एकराशिगतो ग्रहो लग्नं वाऽर्धस्य = दशापतिदत्तदशार्धस्य निजगुणैः = आरोहावरोहोच्चनीचादिभिः पक्ता = पाचको भवति । त्रिकोणगृहगः = पञ्चमनवमस्थानगतो ग्रहस्त्र्यंशस्य, अस्ते = सप्तमस्थानस्थितो ग्रहोःनगांशस्य = सप्तमांशस्य, चतुरस्रगः = चतुर्थाष्टमस्थानस्थः, अङ्घ्रेः = चतुर्थांशस्य पक्ता = पाचको भवति । एकभे = एकराशौ द्वौ, बहवो वा ग्रहाश्चेत्तदा तन्मध्ये यो बली = सर्वतो बलवान्

स एक एव ग्रहः पक्त्रा = अन्तर्दशा पाचको भवति । अंशादौ रूपं कुरु, च = पुनः छिदां = छेदानां समतां कृत्वा नाशं कुरु, ततः स्वदशाः पृथक् २ अंशघ्ना लवैक्याप्ता अंशयोगेन भक्ता अन्तर्दशाः स्युः ।

उप०—येऽर्धत्र्यंशाद्यन्तर्दशानां पाचकास्तेषां सर्वेषामन्तर्दशायोगो दशाब्दतुल्य एव भवति । तस्मात्सर्वांशयोगेन दशाब्दतुल्यान्तर्दशा भवितुमर्हति । तत्र समच्छेदं कृत्वा योगोऽन्तरं वा कार्यमिति । तत्र दशापत्यादीनामंशाः क्रमेण $\frac{१}{१}$, $\frac{१}{२}$, $\frac{१}{३}$, $\frac{१}{७}$, $\frac{१}{४}$ समच्छेदी कृता यदि $\frac{अं}{ह}$, $\frac{अं १}{ह}$, $\frac{अं २}{ह}$, $\frac{अं ३}{ह}$ एषां योगः $\frac{अंशयोगः}{ह}$ । अतोऽनुपातो यदि सर्वांशयोगेन दशातुल्यान्तर्दशा लभ्यते तदा पृथक् पृथगंशेन किमिति = $\dfrac{दशा \times अं०}{\frac{अं० यो० \times ह}{ह}}$ = $\dfrac{दशा \times अं०}{अं० यो०}$ । एवं पृथक्पृथक् अन्तर्दशामानं स्यात् । शेषवासना स्फुटैव ।

हि० टी०—दशापति के साथ एक राशि में रहनेवाला ग्रह मूल दशा के आधा का पाचक ( अन्तर्दशा का अधिपति ) होता है। दशापति से ५, ९ स्थान में रहने वाला ग्रह दशा के तृतीय भाग का पाचक होता है। सप्तम स्थान स्थित ग्रह सप्तमांश का पाचक एवं चतुरस्र ( ४, ८ ) स्थान स्थित ग्रह चतुर्थांश का पाचक होता है। सभी ग्रह अपने-अपने गुण ( आरोहावरोह, उच्च, नीच आदि ) के अनुसार शुभाशुभ फल के पाचक होते हैं। एक राशि में अधिक ग्रह हों तो सबसे बली ग्रह अपने गुण के अनुसार अन्तर्दशा पाचक होता है। यहाँ प्रत्येक अन्तर्दशा पाचक के अंशस्थान में रूप ( १ ) स्थापित कर यथा प्राप्त अर्धत्र्यंशादि लिखना चाहिये। पुनः सबका समच्छेद ( सम हर ) कर हरों का त्याग करे। पुनः मूल दशापति की दशा को पृथक्-पृथक् अंश से गुणा कर अंशों के योग से भाग देने पर क्रम से पृथक्-पृथक् अन्तर्दशायें होती हैं।

अथ विदशादिकमाह—

इत्याभ्यो विदशास्ततोऽप्युपदशास्ताभ्यश्च सूक्ष्मं फलं
पञ्चांशोनदिनद्वयं तु कलयेत्यायुः कृतं दृश्यते ।
पक्षैः खेटलवान्तरेण च भवेन्मासान्तरं चायुषः
प्रोक्तं यैस्तु दशादिलग्नजफलं तेभ्योऽतिदृग्भ्यो नमः ॥ ३४ ॥

अन्वयः—इत्याभ्यः विदशाः ततः उपदशाः ताभ्यः सूक्ष्मं फलं भवति । कलया कृतमायुः पञ्चांशोनदिनद्वयं दृश्यते । पक्षैः खेटलवान्तरेण आयुषः मासान्तरं भवेत् । यैः दशादिलग्नजफलं प्रोक्तं तेभ्योऽतिदृग्भ्यो नमः ।

व्याख्या—इत्याभ्यः = इत्यनेन विधिना अन्तर्दशाभ्यो विदशाः साध्याः । यथा—अन्तर्दशा एव दशा प्रकल्प्याः । अन्तर्दशापतिरेव दशापतिरिति कल्प्यः । ततोऽर्धस्यैकभगा इत्यादिप्रकारेण अन्तर्दशामध्ये विदशा भवन्तीति । ततो विदशाभ्य उक्तप्रकारेणोपदशाः साध्याः । ताभ्यः सूक्ष्मं फलं भवति । कलया = एकया कलया, कृतं = साधितमायुः पञ्चांशोनदिनद्वयं = अष्टचत्वारिंशद्घटिकैकदिनञ्च दृश्यते । पक्षः खेटलवान्तरेण ग्रहाणामंशाद्यन्तरेण आयुषः मासान्तरं भवेत् । यैः = श्रीपत्यादिभिः, दशादिलग्नजफलं प्रोक्तं तेभ्योऽतिदृग्भ्यो = दूरदृष्टिभ्यो नमो = नमस्कारोऽस्तु ।

उप०—यदि नवांशकलाभिरेकं वर्षमायुषः प्रमाणं लभ्यते तदैककलया किमिति एककलासम्बन्धिआयुषः प्रमाणम् । अतो आयुषः प्रमाणम् $= \frac{१ \times १}{२००} =$ वर्षात्मकमायुः । दिनात्मकं करणेन षष्ट्युत्तरशतत्रयेण संगुणनेन—

$$\frac{१ \times १ \times ३६०}{२००} = २ - \frac{१}{५}$$ । तथांऽशाद्यन्तरेण मासाद्यन्तरं भवति । यदि नवांशकलाभिर्द्वादशमासा लभ्यन्ते तदैकांशकलाभिः किमिति=

$$\frac{१२ \times ६०}{२००} = \frac{१८}{५} = ३ + \frac{३}{५} =$$ मासाद्यायुः । अत-उपपन्नमाचार्योक्तम् ।

हि० टी०—अन्तर्दशा साधन की विधि से अन्तर्दशा से विदिशा का साधन होता है। विदिशा के द्वारा उपदशा का साधन करना चाहिये। इसके द्वारा सूक्ष्मफल होता है। ग्रह में यदि १ कला का अन्तर हो तो १ दिन ४८ घटी तुल्य अन्तर होता है। आयुर्दाय साधन में १ कला पर से आयुर्दाय साधन करने पर आयुर्दाय १ दिन ४८ घटी तुल्य होता है। भिन्न-भिन्न पक्षों से ग्रह साधन करने पर ग्रहों में अंशादि अन्तर आता है। उक्त विविध मतों से साधित ग्रहों के द्वारा जो आचार्य दशाफल, लग्नफल आदि साधन करते हैं उन दूरदर्शियों को नमस्कार है।

अथ सूक्ष्मदशाफलार्थं दशाप्रवेशकालिक लग्नसाधनमाह—

शाकोऽब्दाः जनिमध्यमार्कभमुखं मासादि तद्युग्दशा-
ऽब्दाद्यं तत्र शके स भादितरणिर्मध्यो दशादौ भवेत्।
घस्त्रीभूतदशा पृथक् त्रिकुहता खाङ्काष्टहृत्तद्युता
सा स्यात्सावनिका दशाब्दपलयुक्तद्युगूजनिद्युव्रजः ॥३५॥

तस्मात् सावयवाद्गणात्स्वकरणात्साध्या दशादौ खगाः
क्षेपान् जन्मखगान् प्रकल्प्य यदि वा साध्या दशा सावनात्।
ते स्पष्टाश्च तिथिश्च सङ्क्रमवशान्मासो दशादौ तनुः।
पूर्वोक्तं जडकर्म चात्र तु मया तल्लाघवं दर्शितम् ॥ ३६ ॥

अन्वयः—शाकोऽब्दाः जनिमध्यमार्कभमुखं मासादि कल्प्यम्, तद्युगदशाब्दाद्यं कार्यम्। तत्र शके दशादौ स मध्यो भादितरणिः भवेत्। घस्त्रीभूतदशा पृथक् सा त्रिकुहता खाङ्काष्टहृत् तद्युता दशाब्दपलयुक् सा सावनिका तद्युगूजनिद्युव्रजः कार्यः। तस्मात् सावयवाद् गणात् स्वकरणात् दशादौ खगाः साध्याः। यदि वा जन्मखगान् क्षेपान् प्रकल्प्य दशा सावनात् स्वकरणाद् खगा साध्याः। ते च स्पष्टाः, तिथिश्च साध्याः। सङ्क्रमवशान्मासः, दशादौ तनुः साध्या। पूर्वोक्तं जडकर्म, अत्र तु मया तल्लाघवं दर्शितम्।

व्याख्या—शाकः = जन्मकालिकशाकः अब्दाः कल्प्याः, जनिमध्यमार्कभमुखं = जन्मकालीनसूर्यराश्यादिकं मासादिकं कल्प्यम्। तद्युग-

दशाब्दाद्यम् = तेनाब्दादिना युक्तं दशाब्दाद्यं कार्यम्। एवं यः शाको यच्च राश्यादिकमुत्पद्यते, तत्र = तस्मिन् शके दशादौ अग्रिम-दशाप्रवेशसमये स मध्यो भादितरणिः = मध्यमो राश्यादिसूर्यो भवेत्। तत्र शाके तत्तुल्यो मध्यमसूर्यो यदा भवति तदैवाग्रिमदशाप्रवेशो भवतीति बोध्यम्। अथ तात्कालिकमासाद्यानयनम्—घस्रीभूतदशा = दिनीकृतदशा, पृथक् = स्थानान्तरे स्थाप्या। सा त्रिकुहता = त्रयोदशगुणा, खाङ्काष्टहृत्, तद्युता = तेन फलेन दिनाद्येन युक्ता, पृथक्स्था कार्या। तथा दशाब्दपलयुक्, एवं सा सावनिका दशा भवति। तद्युग्जनिद्युव्रजः = तया सावनात्मिकया दशया युक्तो जन्मकालिकोऽहर्गणः कार्यः, स दशाप्रवेशकालिकोऽहर्गणो भवति। जन्मकालिकसूर्योदयकालिकोऽहर्गणस्सूर्योदयादूगतेष्टघटीपलयुतो जन्मकालिकोऽहर्गणः सावयवो भवति। तस्मात्सावयवाद् गणादहर्गणात्, स्वकरणात् दशादौ खगाः साध्याः। यदि वा जन्मखगान् क्षेपान् प्रकल्प्य दशासावनात्स्वकरणाद्ग्रहाः साध्याः। ते च साधिता ग्रहाः स्पष्टाः कार्याः। तथा च स्पष्टसूर्यचन्द्राभ्यां तिथिः साध्या। तथा संक्रमवशान्मासो ज्ञेयः, दशादौ तनुः साध्या। ततः फलं वाच्यमिति शेषः। पूर्वोक्तं = पूर्वाचार्यैर्यदुक्तं तत्र जडकर्म अस्ति। अत्रास्मिन् ग्रन्थे तु मया तल्लाघवं दर्शितम्।

उप०—सौरवर्षादौ शाकारम्भो भवति, तथा रवेरेकराशिभोगकालः एकः सौरो मासो भवति। अतो "शाकोऽब्दा" इत्यादि स भादितरणिर्मध्यो दशादौ भवेदिति सयुक्तिकमेव। अनेन प्रकारेण दशा दिवसा सौरात्मकाः सन्ति। अतो सावनात्मककरणार्थमनुपातः—यदि युगसौरदिनैर्युगसौरसावनयोरन्तरं लभ्यते तदेष्टदशादिनाद्यैः किमितीष्टान्तरम्

$$= \frac{\text{दशादि} \times २२७१७८२८}{१५५५२००००००} = \frac{\text{दशादि} \times १३}{८८९ + \frac{१६५०२७५}{१७४७५२५}}$$

$$= \frac{\text{दशादि} \times १३}{८९०}$$ स्वल्पान्तरात्। एतेन पृथक्स्था युक्ता

सावनिका दशा भवितुमर्हति। अत्र हरः किञ्चिदधिकस्तेन फले अल्पत्वं जातम्। अतो युगसौरदिवसास्त्रयोदशनिघ्नाः खाङ्काष्टभक्ता लब्धफलेन युता युगसौरा युगसावनेभ्योऽल्पा भवन्ति, तेषां युगसावनानाञ्चान्तरम् = १४२३। अतोऽनुपातो यदि युगसौरवर्षैरिदं १४२३ दिना-

स्मकमन्तरं लभ्यते तदेष्टदशावर्षैः किमिति दिनात्मकमन्तरम् =

$\frac{१४२३ \times दशाव०}{४३२००००}$ । षष्टिवर्गगुणितं पलात्मकमिष्टान्तरम् =

$\frac{दशावर्ष \times ५१२२८००}{४३२००००}$ = दशावर्षमानम् । स्वल्पान्तरात्पूर्वसाधित-
सावनेष्वेतावती न्यूनताऽऽसीदतो दशाब्दतुल्यं पलं योज्यमेवेत्युपपन्नम् ।

अथ दशाशुभाशुभफलमाह—

चन्द्रः प्राप्तदशेश्वरस्य सुहृदुच्चस्वर्क्षसंस्थो दशा-
नाथाद् धीनवसप्तमोपचयगो दद्याच्छुभानीति च ।
यस्मिन्भेऽत्र विधुः स जन्मनि तनुस्वायादभावा यदा
तत्तद्वृद्धिकरोऽथ तत्क्षयकरः प्रोक्तेतरस्थानगः ॥ ३७ ॥

अन्वयः—प्राप्तदशेश्वरस्य सुहृदुच्चस्वर्क्षसंस्थः चन्द्रः शुभानि दद्यात् । दशानाथात् धीनवसप्तमोपचयगः शुभानि दद्यात् । अत्र विधुः यस्मिन्भे स्थितः स जन्मनि तनुस्वायादिभावाः यः भवति तत्तद्वृद्धिकरः, अथ इतर-स्थानगः तत्क्षयकरः स्यात् ।

व्याख्या—प्राप्तदशेश्वरस्य सुहृदुच्चस्वर्क्षसंस्थो = वर्तमानदशाधीश्व-रस्य सुहृद्भे वा तस्योच्चराशावपि स्वर्क्षे = स्वराशौ कर्कटे वा स्थितश्चन्द्रः शुभानि = शुभफलानि ददाति । वा दशानाथात् धीनवसप्तमोपचयगश्चन्द्रः शुभानि दद्यात् । शुभफलप्रदे सति अत्र = दशासमये विधुः = चन्द्रो-यस्मिन्भे स्थितः स राशि जन्मनि = जन्मकाले तनुस्वायादिभावेषु यस्मि-न्भावे गतो भवति तत्तद्वृद्धिकरो भवति । यथा—यदि चन्द्राधिष्ठित-राशिलग्ने भवति तदा देहस्य सौख्यं जायते । एवमेव यदि धनभावे चन्द्राक्रान्तराशिस्तदा धनवृद्धिरिति भवति । परन्त्वत्र "कथयति विप-रीतं रिष्फषष्ठाष्टमेषु" इति वराहमिहिरोक्ते यदि षष्ठाष्टमव्ययभावेषु स्थितश्चन्द्रस्तदा तद् भावस्य नाश एव भवति । अथ प्रोक्तेतरस्थान-गश्चन्द्रो भवति तदा तत्तद्भावनाशः करोति ।

उपपत्तिरत्रागममूलेव ।

हि० टी०—चन्द्र यदि वर्तमान दशा के स्वामी के मित्र की राशि, उच्च-राशि अथवा अपनी राशि ( कर्क ) अथवा दशापति से ५।६।७।३।६।१०।११ वें

स्थानों में स्थित हो तो शुभ फलद होता है। इस प्रकार शुभफल प्राप्त होने पर चन्द्रमा वर्तमान दशाकाल में जिस राशि में हो वह राशि जन्म समय में जिस भाव में पड़ी हो उस भाव का फल उत्तम होता है। यदि ६,८,१२ वें भाव में वह राशि हो तो इन भावों का नाश होता है। यदि चन्द्र उपर्युक्त स्थानों से भिन्न स्थान में स्थित हो तो चन्द्राधिष्ठित राशि जिस भाव में हो उस उस भाव का नाश होता है, और ६,८,१२ वें स्थान में चन्द्राधिष्ठितराशि हो तो इन भावों की वृद्धि होती है।

अथान्यविशेषमाह—

यद्द्रव्यं खचरस्य भावगृहदृग्योगादि सर्वं फलं
योज्यं वृत्ति कृतिर्बलादिह दशायां चाथ यो वैरयुक्।
पापः पापदशां विशेत्स च विपत्कर्त्ताऽथ तद्भङ्गद-
स्तत्काले बलवान् खगः शुभसुहृद्दृष्टेष्टषड्वर्गगः ॥३८॥

अन्वयः—खचरस्य यद्द्रव्यं भावगृहदृग्योगादि सर्वं फलं बलाद् दशायां योज्यम्। वृत्तिकृतिः च दशायां योज्यम्। अथ वैरयुक् पापः पापदशां विशेत् स विपत्कर्त्ता स्यात्। अथ तत्काले बलवान् खगः शुभसुहृद्दृष्टेष्टषड्वर्गगः स तद्भङ्गदः स्यात्।

व्याख्या—खचरस्य = ग्रहस्य यद्द्रव्यं = ताम्रादिद्रव्यं तथा भावगृहदृग्योगादि = भावफल-राशिफल-दृष्टिफलयोगादिकं सर्वं फलं बलाद् दशायां योज्यम्। अर्थात् ग्रहो यदि पूर्णबली तदा सर्वं फलं पूर्णम्, यदि च ग्रहः मध्यबली तदा फलं मध्यममेवमेव यदि हीनबली ग्रहस्तदा सर्वं फलमल्पमिति भवति। तथा वृत्तिकृतिः=अजीविका च। अथात्र यो ग्रहो वैरयुक् = वैरेण युक्तः वा पापः = पापग्रहो यदि पापदशां विशेत् तदा स विपत्कर्त्ता स्यात्। अथ तत्काले अन्तर्दशाकाले कश्चिद् बलवान् खगः शुभसुहृद्दृष्टेष्टषड्वर्गगस्तदा स तद्भङ्गदः = रिष्टभङ्गकारको भवति। उपपत्तिरत्रागममूलैव।

हि० टी०—ग्रहों का द्रव्य जो ग्रन्थान्तरों में पठित है और भावफल, राशिफल, दृष्टिफल, योगादिफल तथा आजीविका आदि सम्पूर्ण फल, ग्रह के बल के अनुसार दशा में प्राप्त होता है। यदि ग्रह पूर्णबली हो तो शास्त्रों में वर्णितफल पूर्ण प्राप्त होते हैं। यदि ग्रह मध्यबली हो तो फल मध्यम एवं

यदि ग्रह हीनबली हो तो फल न्यून प्राप्त होता है। यदि पापग्रह की दशा में पापग्रह की अथवा शत्रु ग्रह की अन्तर्दशा हो तो उसमें विपत्ति प्राप्त होती है। यदि दशाकाल में कोई ग्रह बलवान् होकर शुभग्रह से अथवा मित्रग्रह से दृष्ट हो अथवा शुभग्रह के अथवा मित्र ग्रह के षड्वर्ग में स्थित हो तो विपत्ति भङ्ग करने वाला होता है।

अथाष्टवर्गफलस्याल्पत्वाधिकत्वकल्पनामाह—

**खेटस्तस्य यदष्टवर्गजफलं पूर्णं शुभं जन्मत-**
**न्विन्द्वोर्वृद्धिषु च स्वभोच्चभसुहृद्भस्वत्रिकोणेऽस्ति यः।**
**दुष्टं मध्यफलं विपर्ययगतस्यानिष्टमत्युत्कटं**
**शस्तं स्वल्पतरं खगस्य च वदेज् ज्ञात्वा बलं तत्त्वतः ॥३९॥**

अन्वयः—यः खेटः जन्मतन्विन्दोः वृद्धिषु च स्वभोच्चभसुहृद्भस्वत्रिकोणेऽस्ति तदा तस्य शुभमष्टवर्गजफलं पूर्णं भवति। यद् दुष्टं तन्मध्यफलं तथा विपर्ययगतस्य यदनिष्टफलं तदुत्कटं, यच्च शस्तं तत्स्वल्पतरं भवति। अतः खगस्य बलं तत्त्वतः ज्ञात्वा फलं वदेत्।

व्याख्या—यः खेटो जन्मतन्विन्दोः = जन्मकालिकलग्नचन्द्रयोर्वृद्धिषूपचयस्थानेषु च स्वभोच्चभसुहृद्भस्वत्रिकोणे = स्वराशौ, स्वोच्चराशौ, सुहृद्राशौ, स्वमूलत्रिकोणराशौ, एष्वन्यतमे स्थितो अस्ति = वर्तते, तस्य = ग्रहस्य यत् शुभमष्टवर्गजफलं तत् पूर्णं भवति। यद् दुष्टं = यदशुभफलं तन्मध्यफलं = उक्तग्रहस्याशुभाष्टवर्गजफलं मध्यं भवति। तथा च विपर्ययगतस्य = जन्मलग्नचन्द्रयोरुपचयभिन्नस्थानेषु शत्रुनीचादिराशिषु च स्थितस्य ग्रहस्य यदनिष्टमष्टवर्गजफलं तदुत्कटं पूर्णं शस्तं = शुभमष्टवर्गजफलं तत्स्वल्पतरं भवति। अतः खगस्य = ग्रहस्य बलं = वीर्यं तत्त्वतो ज्ञात्वा = विज्ञाय, फलं वदेद्धीमानिति शेषः।

उप०—उपपत्तिरत्रागममूलैव।

हि० टी०—जन्मलग्न अथवा चन्द्र से ग्रह यदि उपचय (३, ६, १०, ११) स्थानों में स्थित होकर स्वराशि, स्वोच्चराशि, अपने मित्रग्रह की राशि अथवा अपनी मूलत्रिकोणराशि में से किसी में हो तो ग्रह के शुभ अष्टवर्गज फल पूर्ण

और अशुभ अष्टवर्गजफल मध्यम होते हैं। ग्रह यदि जन्मलग्न या चन्द्र से उपचय भिन्न ( १, २, ४, ५, ७, ८, ९, १२ ) स्थानों में स्थित होकर शत्रु की राशि अथवा अपनी नीच राशि में हो तो ग्रह का अशुभाष्टवर्गज फल पूर्ण और शुभाष्टवर्गजफल अल्प होता है। अत एव ग्रहों का बल सम्यक् विचार कर अष्टवर्गजफल कहना चाहिये।

अथ क्वचित्फलस्य व्यभिचारे किं करणीयमित्याह—

जीवेत्क्वापि विभङ्गरिष्टजशिशूरिष्टं विना मीयते-
ऽथाद्योऽब्दः शिशुदुस्तरोऽपि च परौ कार्येषु नो पत्रिका।
कार्या प्रश्ननिमित्तपूर्वशकुनैर्मानं धिया रक्षता-
होराज्ञेन सुबुद्धिनाऽत्र बहुधोदर्कश्चकालो बली ॥४०॥

अन्वयः—क्वापि विभङ्गरिष्टजशिशुः जीवेत्, क्वापि रिष्टं विनाऽपि मीयते। अथाद्योब्दः शिशुदुस्तरः परौ च दुस्तरौ। अतः एषु पत्रिका न कार्या। अत्र सुबुद्धिना होराज्ञेन प्रश्ननिमित्तपूर्वशकुनैः धिया मानं रक्षता पत्रिका कार्या। बहुधोदर्कः कालः बली स्यात्।

व्याख्या—क्वापि विभङ्गरिष्टजशिशुः = विगतो भङ्गो यस्य तच्च तद्रिष्टं चेति विभङ्गरिष्टं तत्र जातः शिशुः ( प्रबलरिष्टजातः शिशुरित्यर्थः ) जीवेत्। तथा क्वापि रिष्टं विनाऽपि मीयते = म्रियते। अथाद्योऽब्दः = प्रथमाब्दः, शिशुदुस्तरः परौ = द्वितीयतृतीयवर्षौ शिशोर्दुस्तरौ। अत एवैषु = प्रथमादि त्रिषु वर्षेषु पत्रिका = जन्मपत्रिका न कार्या। आग्रहेण कोऽपि वर्षत्रयाभ्यन्तरे पत्रिकां क्रियतामिति वदेत् तदा तत्र सुबुद्धिना होराज्ञेन प्रश्ननिमित्तपूर्वशकुनैर्धिया = स्वबुद्ध्या स्वमानं रक्षता पत्रिका कार्या। यत् उदर्को = भाविफलं बहुधा कालश्च बली स्यात्। अथवा बहुधोदर्को यत्र स बहुधोदर्क इति कालस्य विशेषणं बोध्यम्।

अत्रयुक्तिः—ज्योतिः शास्त्रमनन्तमिति हेतोः ज्योतिर्विदः कदाचिद्-भङ्गो नोपलब्धुं शक्यते, कदाचिच्च रिष्टभङ्गसत्त्वेऽपि भङ्गभ्रमो भवितु-मर्हत्येव। अत एव रिष्टं विना मरणं रिष्ट-संजातेऽपि जीवनं भवितुमर्ह-त्येव। तथा सर्वेषु होराग्रन्थेषु प्रथमादिवर्षत्रये बहुधा रिष्टान्युक्तान्ये-वातस्तत्र पत्रिकाकरणनिषेध इति युक्तियुक्तमेव।

हि० टी०—कभी २ कुण्डली में प्रबल अरिष्ट रहने पर भी बालक जीवित रहता है और कभी २ विना अरिष्ट के भी बालक की मृत्यु हो जाती है। जातक के लिये १,२,३ वर्ष दुस्तर होते हैं। अतः तीन वर्षों तक जन्मपत्रिका नहीं बनानी चाहिये। यदि आग्रहवश किसी की जन्म पत्रिका बनानी हो तो अपनी बुद्धि से मर्यादा की रक्षा करते हुए होराशास्त्रज्ञ सूक्ष्म जन्मसमय से स्पष्टग्रह आदि तथा प्रश्नकाल से शुभाशुभ शकुन विचार कर पत्रिका निर्माण करे। क्योंकि भावीफल बहुत हैं और काल सबसे बली है।

अथ ग्रथालङ्करणमाह—

नन्दिग्रामे केशवो विप्रवर्यो योऽभूद्धोराशास्त्रसङ्घं विलोक्य।
तेनोक्तेयं पद्धतिर्जातकीया चत्वारिंशद्वृत्तबद्धा सुबोधा ॥४१॥

अन्वयः—नन्दिग्रामे विप्रवर्यः यः केशवोऽभूत्। तेन होराशास्त्रसंघं विलोक्य इयं चत्वारिंशद्वृत्तबद्धा सुबोधा जातकीया पद्धतिरुक्ता।

हि० टी०—नन्दिग्राम में ब्राह्मणवर्ग में श्रेष्ठ केशव दैवज्ञ हुए। उन्होंने होराशास्त्रों का अवलोकन कर चालीस श्लोकों में इस सुबोध जातकपद्धति को बनायी है।

अथ ग्रन्थप्रशंसामाह—

ये सुबोधां पठन्तीमामग्र्यां जातकपद्धतिम्।
होरावित्पदवीं यान्ति लोके मानं यशश्च ते ॥४२॥

अन्वयः—ये इमां अग्र्यां जातकपद्धतिं पठन्ति, ते होरावित्पदवीं यान्ति। लोके मानं यशश्च यान्ति।

व्याख्या—ये जनाः इमां अग्र्यां=श्रेष्ठां, सुबोधां जातकपद्धतिं=जातकपद्धतिनामकं जातकग्रन्थं पठन्ति ते होरावित्पदवीं यान्ति। तथा लोके=संसारे मानं यशश्च यान्ति=प्राप्नुवन्ति।

हि० टी०—जो व्यक्ति श्रेष्ठ एवं सुबोध जातक पद्धति का अध्ययन करता है वह होराशास्त्रज्ञ की प्रतिष्ठा और लोक में मान तथा यश प्राप्त करता है।

# अक्षांशरेखांशादि सारिणी

| नगरनाम | | उ० अक्षांश | पू० रेखांश | काशी से देशान्तर | |
|---|---|---|---|---|---|
| | | अं० क० | अं० क० | घ० प० वि० | घं०मि०से० |
| अकबरपुर | उ० प्र० | २६।२६ | ८२।३३ | − ०। ४।३० | ०। १।४८ |
| अकोट | महाराष्ट्र | २१। ६ | ७७।०६ | − ०।५६। ० | ०।२३।३६ |
| अकोला | महाराष्ट्र | २०।४२ | ७७।०२ | − ०।५६।४० | ०।२३।५२ |
| अगरतला | त्रिपुरा | २३।५० | ९१।२५ | + १।२४।१० | ०।३३।४० |
| अजन्ता | महाराष्ट्र | २०।३३ | ७५।४८ | − १।१२। ० | ०।२८।४८ |
| अजमेर | राज० | २६।२७ | ७४।४२ | − १।२३। ० | ०।३३।१२ |
| अतरौली | उ० प्र० | २८।०२ | ७८।१८ | − ०।४७। ० | ०।१८।४८ |
| अन्नपूर्णा | नेपाल | २८।३५ | ८३।५७ | + ०। ९।३० | ०। ३।४८ |
| अनन्तपुर | आन्ध्र० | १४।४१ | ७७।३९ | − ०।५३।३० | ०।२१।२४ |
| अम्बाला | हरियाणा | ३०।२१ | ७६।५२ | − १। १।२० | ०।२४।३२ |
| अम्बिकापुर | म० प्र० | २३।१० | ८३।१५ | + ०। २।३० | ०। १। ० |
| अमरकंटक | म० प्र० | २२।३० | ८१।२० | − ०।१६।४० | ०। ६।४० |
| अमृतसर | पंजाब | ३१।४५ | ७४।५५ | − १।२०।५० | ०।३२।२० |
| अयोध्या | उ० प्र० | २६।४८ | ८२।१४ | − ०। ७।४० | ०। ३।०४ |
| अलवर | राज० | २७।३४ | ७६।३८ | − १। ३।४० | ०।२५।२८ |
| अलीगढ़ | उ० प्र० | २७।५४ | ७५।०६ | − १।१९। ० | ०।३१।३६ |
| अलीगढ़ | राज० | २५।५८ | ७६।०७ | − १। ८।५० | ०।२७।३२ |
| अहमदनगर | महा० | १९।०५ | ७४।४८ | − १।२२। ० | ०।३२।४८ |
| अहमदाबाद | गुजरात | २३।०३ | ७२।४० | − १।४३।२० | ०।४१।२० |
| आगरा | उ० प्र० | २७।१० | ७८।०५ | − ०।४९।१० | ०।१९।४० |
| आजमगढ़ | उ० प्र० | २६।०३ | ८३।१३ | + ०। २।१० | ०। ०।५२ |
| आरा | बिहार | २५।३४ | ८४।३२ | + ०।१५।२० | ०। ६। ८ |
| आसनसोल | प० बंगाल | २३।४२ | ८७।२० | + ०।४३।२० | ०।१७।२० |
| इटारसी | म० प्र० | २२।३० | ७७।५५ | − ०।५०।५० | ०।२०।२० |
| इटावा | उ० प्र० | २६।४७ | ७९।०२ | − ०।३९।४० | ०।१५।५२ |
| इन्दौर | म० प्र० | २२।४४ | ७५।५० | − १।११।४० | ०।२८।४० |
| इम्फाल | मनीपुर | २४।४४ | ९३।५८ | + १।४९।४० | ०।४३।५२ |
| इलाहाबाद | उ० प्र० | २५।२८ | ८१।५४ | − ०।११। ० | ०। ४।२४ |

| नगरनाम | | उ० अक्षांश | पू० रेखांश | काशी से देशान्तर | |
|---|---|---|---|---|---|
| | | अं० क० | अं० क० | घ० प० वि० | घं०मि०से० |
| उज्जैन | म० प्र० | २३।०६ | ७५।४३ | – १।१२।५० | ०।२६। ८ |
| उटकमंड | तामिल० | ११।२४ | ७६।४४ | – १। २।४० | ०।२५।०४ |
| उत्तरकाशी | उ० प्र० | ३०।४३ | ७८।४० | – ०।४३।२० | ०।१७।२० |
| उदयपुर | राज० | २४।३६ | ७३।४४ | – १।३२।४० | ०।३७। ४ |
| उन्नाव | उ० प्र० | २६।४८ | ८०।४३ | – ०।२२।५० | ०। ६। ८ |
| एटा | उ० प्र० | २७।३५ | ७८।४० | – ०।४३।२० | ०।१७।२० |
| एलोरा | महा० | २०।०३ | ७५।१० | – १।१८।२० | ०।३१।२० |
| औड़िहार | उ० प्र० | २५।२५ | ८३।१० | + ०। १।४० | ०। ०।४० |
| औरंगाबाद | बिहार | २४।४५ | ८४।२५ | + ०।१४।१० | ०। ५।४० |
| औरंगाबाद | महा० | १६।५३ | ७५।२३ | – १।१६।१० | ०।३०।२८ |
| क्वेटा | पाकि० | ३०।१२ | ६७।०० | – २।४०। ० | १। ४। ० |
| कच्छ का रण | भारत | २४।०० | ७०।०० | – २।१०। ० | ०।५२। ० |
| कटक | उड़ीसा | २०।२८ | ८५।५४ | + ०.२६। ० | ०।११।३६ |
| कटनी | म० प्र० | २३।४७ | ८०।२७ | – ०.२५।३० | ०।१०।१२ |
| कटिहार | बिहार | २५।३० | ८७।४० | + ०।४६।४० | ०।१८।४० |
| कन्नौज | उ० प्र० | २७। ३ | ७६।५८ | – ०।३०।२० | ०।१२। ८ |
| करनाल | हरयाणा | २६।४० | ७७।०२ | – ०।५६।४० | ०।२३।५२ |
| करांची | पाकि० | २४।५५ | ६७।०० | – २।४०। ० | १। ४। ० |
| करीमगंज | असम | २४।४० | ९२।३० | + १।३५। ० | ०।३८। ० |
| काठमांडू | नेपाल | २७।४२ | ८५।१२ | + ०।२२। ० | ०। ८।४८ |
| कानपुर | उ० प्र० | २६।२८ | ८०.२४ | – ०।२६। ० | ०।१०।२४ |
| कुदरा | बिहार | २५। ५ | ८३।३७ | + ०। ६।१० | ०। २।२८ |
| कुरुक्षेत्र | हरयाणा | २६।५८ | ७६।५१ | – १। १।३० | ०।२४।३६ |
| कोचीन | केरल | ९।५८ | ७६।१७ | – १। ७।१० | ०।२६।५२ |
| कोटा | राज० | २५।१० | ७५।५२ | – १।११।२० | ०।२८।३२ |
| कोडरमा | बिहार | २४।३० | ८५।३४ | + ०।२५।४० | ०।१०।१६ |
| कोल्हापुर | महा० | १६।४२ | ७४।१६ | – १।२७।२० | ०।३४।५६ |
| कोलम्बो | श्रीलंका | ६।५६ | ७९।५६ | – ०।३०।४० | ०।१२।१६ |
| कोहिमा | नागालैंड | २५।४० | ९४।०८ | + १।५१।२० | ०।४४।३२ |
| खड़गपुर | प० बं० | [illegible] | ८७।२० | + ०।४३।२० | ०।१७।२० |

| नगरनाम | | उ० अक्षांश | पू० रेखांश | काशी से देशान्तर | |
|---|---|---|---|---|---|
| | | अं० क० | अं० क० | घ० प० वि० | घं० मि० से० |
| खुर्जा | उ० प्र० | २८।१५ | ७७।५० | – ०।५१।४० | ०।२०।४० |
| ग्वालियर | म० प्र० | २६।१४ | ७८।१० | – ०।४८।२० | ०।१९।२० |
| गढ़वा | बिहार | २४.१० | ८३।५२ | + ०। ८।४० | ०। ३।२८ |
| गया | बिहार | २४।४९ | ८५।०१ | + ०।२०।१० | ०। ८। ४ |
| गाजियाबाद | उ० प्र० | २८।४० | ७७।२८ | – ०।५५।२० | ०।२२।०८ |
| गाजीपुर | उ० प्र० | २५।३४ | ८३।३५ | + ०। ५।५० | ०। २।२० |
| गिरिडीह | बिहार | २४।१० | ८६।२१ | + ०।३३।३० | ०।१३।२४ |
| गुजरात | भारत | २३। ० | ७२।०० | – १।५०। ० | ०।४४। ० |
| गोआ | भारत | १५।१५ | ७४।०० | – १।३०। ० | ०।३६। ० |
| गोंडा | उ० प्र० | २७। ६ | ८१।५९ | – ०।१०।१० | ०। ४। ४ |
| गोपालगंज | बिहार | २६।२८ | ८४।२६ | + ०।१४।२० | ०। ५।४४ |
| गोरखपुर | उ० प्र० | २६।४५ | ८३।२४ | + ०। ४। ० | ०। १।३६ |
| गौहाटी | असम | २६।११ | ९१।४७ | + १।२७।५० | ०।३५। ८ |
| गंगोत्री | उ० प्र० | ३०।५८ | ७९।०० | – ०।४०। ० | ०।१६। ० |
| चकिया | उ० प्र० | २५। ४ | ८३।१२ | + ०। २। ० | ०। ०।४८ |
| चटगाँव | बंगलादेश | २२।२१ | ९१।५३ | + १।२८।५० | ०।३५।३२ |
| चन्दौसी | उ० प्र० | २८।२७ | ७८।४९ | – ०।४१।५० | ०।१६।४४ |
| चितरंजन | बिहार | २३।५० | ८७। ० | + ०।४०। ० | ०।१६। ० |
| चुर्क | उ० प्र० | २४।५० | ८३.२० | + ०। ३।२० | ०। १।२० |
| छपरा | बिहार | २५।४७ | ८४।४७ | + ०।१७।५० | ०। ७। ८ |
| छतरपुर | म० प्र० | २४।५४ | ७९।३८ | – ०।३३।४० | ०।१३।२८ |
| जबलपुर | म० प्र० | २३।१० | ७९।५९ | – ०।३०।१० | ०।१२। ४ |
| जम्मू | जम्मूका० | ३२।४३ | ७४.५४ | – १।२१। ० | ०।३२।२४ |
| जमशेदपुर | बिहार | २२।५० | ८६।१० | – ०।३१।४० | ०।१२।४० |
| जमालपुर | बिहार | २५।१९ | ८६।३२ | + ०।३५।२० | ०।१४। ८ |
| जयपुर | राज० | २६।५५ | ७५।५२ | – १।११।२० | ०।२८।३२ |
| जसिडीह | बिहार | २४।३२ | ८६।३८ | + ०।३६।२० | ०।१४।३२ |
| जामनगर | गुजरात | २२।२७ | ७०।०७ | – २। ८।५० | ०।५१।३२ |
| जालन्धर | पंजाब | ३१।१९ | ७५।१० | – १।१८।२० | ०।३१।२० |
| जालौन | उ० प्र० | २६।०८ | ७९।२३ | – ०।३६।१० | ०।१४।२८ |

| नगरनाम | | उ० अक्षांश | पू० रेखांश | काशी से देशान्तर | |
|---|---|---|---|---|---|
| | | अं० क० | अं० क० | घ० प० वि० | घं०मि०से० |
| जींद | हरयाणा | २९।२९ | ७६।२३ | –१। ६।१० | ०।२६।२८ |
| जोगवनी | बिहार | २६।२५ | ८७।२७ | +०।४४।३० | ०।१७।४८ |
| जोधपुर | राज० | २६।१८ | ७३।०४ | –१।३९।२० | ०।३९।४४ |
| जोरहाट | असम | २६।४५ | ९४।१६ | +१।५२।४० | ०।४५। ४ |
| जौनपुर | उ० प्र० | २५।४६ | ८२।४४ | –०। २।४० | ०। १। ४ |
| जंघई | उ० प्र० | २५।३४ | ८२।१८ | –०। ७। ० | ०। २।४८ |
| झाझा | बिहार | २४।४८ | ८६।२२ | +०।३३।४० | ०।१३।२८ |
| झांसी | उ० प्र० | २५।२७ | ७८।३० | –०।४५। ० | ०।१८। ० |
| टिहरी | उ० प्र० | ३०।२१ | ७८।३१ | –०।४४।५० | ०।१७।५६ |
| टूण्डला | उ० प्र० | २७।१३ | ७८।१४ | –०।४७।४० | ०।१९।०४ |
| डिहरी | बिहार | २४।५४ | ८४।१२ | +०।१२। ० | ०। ४।४८ |
| डुमरांव | बिहार | २५।३२ | ८४।१२ | +०।१२। ० | ०। ४।४८ |
| ढाका | बंगला० | २३।४८ | ९०।२६ | +१।१४।२० | ०।२९।४४ |
| तिनसुकिया | असम | २७।३० | ९५।२१ | +२। ३।३० | ०।४९।२४ |
| तिरुपति | आ० प्र० | १३।४० | ७९।२० | –०।३६।४० | ०।१४।४० |
| तेजपुर | असम | २६।३७ | ९२।५० | +१।३८।२० | ०।३९।२० |
| दमदम | प० बं० | २२।३८ | ८८।२८ | +०।५४।४० | ०।२१।५२ |
| दरभङ्गा | बिहार | २६।१० | ८५।५७ | +०।२९।३० | ०।११।४८ |
| दार्जिलिंग | प० बं० | २७।०३ | ८८।१८ | +०।५३। ० | ०।२१।१२ |
| द्वारका | गुज० | २२।१७ | ६९।०१ | –२।१९।५० | ०।५५।५६ |
| दिल्ली | भारत | २८।३८ | ७७।१२ | –०।५८। ० | ०।२३।१२ |
| दिलदारनगर | उ० प्र० | २५।४५ | ८३।४० | +०। ६।४० | ०। २।४० |
| देवरिया | उ० प्र० | २६।२३ | ८३।४२ | +०। ७। ० | ०। २।४८ |
| दोहरीघाट | उ० प्र० | २६।१४ | ८३।३३ | +०। ५।३० | ०। २।१२ |
| धनवाद | बिहार | २३।४७ | ८६।५० | +०।३८।२० | ०।१५।२० |
| नागदा | म० प्र० | २३।२८ | ७५।२८ | –१।१५।२० | ०।३०। ८ |
| नागपुर | महा० | २१।०९ | ७९।०९ | –०।३८।३० | ०।१५।२४ |
| नाथद्वारा | राज० | २४।५६ | ७३।५२ | –१।३१।२० | ०।३६।३२ |
| नालन्दा | बिहार | २५।०२ | ८५।२५ | +०।२४।१० | ०। ९।४० |
| नासिक | महा० | २०।०२ | ७३।५० | –१।३३।४० | ०।३६।४० |

| नगरनाम | | उ० अक्षांश | पू० रेखांश | काशी से देशान्तर | |
|---|---|---|---|---|---|
| | | अं० क० | अं० क० | घ० प० वि० | घं०मि०से० |
| नेत्रहाट | बिहार | २३।२६ | ८४।१५ | +०।१२।३० | ०। ५। ० |
| नैनीताल | उ० प्र० | २६।२३ | ७६।३० | −०।३५। ० | ०।१४। ० |
| पटना | बिहार | २५।३७ | ८५।१३ | +०।२२।१० | ०। ८।५२ |
| पटियाला | पंजाब | ३०।२० | ७६।२५ | −१। ५।५० | ०।२६।२० |
| पिथौरागढ़ | उ० प्र० | २६।३८ | ८०।१३ | −०।२७।५० | ०।११। ८ |
| पूना | महा० | १८।३१ | ७३।५५ | −१।३०।५० | ०।३६।२० |
| पूर्णिया | बिहार | २५।४६ | ८७।३१ | +०।४५।१० | ०।१८। ४ |
| पोरबन्दर | गुजरात | २१।३७ | ६६।४६ | −२।११।५० | ०।५२।४४ |
| पौड़ी | उ० प्र० | ३०। ५ | ७८।५५ | −०।४०।५० | ०।१६।२० |
| फतेहपुर | उ० प्र० | २५।५५ | ८०।५२ | −०।२१।२० | ०। ८।३२ |
| फतेह० सिकरी | उ० प्र० | २७।०० | ७७।३७ | −०।५३।५० | ०।२१।३२ |
| फूलपुर | उ० प्र० | २५।३२ | ८२।०७ | −०। ८।५० | ०। ३।३२ |
| फैजाबाद | उ० प्र० | २६।४७ | ८२।१२ | −०। ८। ० | ०। ३।१२ |
| बक्सर | बिहार | २५।३४ | ८४। १ | +०।१०।१० | ०। ४। ४ |
| बदायूँ | उ० प्र० | २८।०२ | ७६।१० | −०।३८।२० | ०।१५।२० |
| बद्रीनाथ | उ० प्र० | ३०।४४ | ७६।३२ | −०।३४।४० | ०।१३।५२ |
| बम्बई | महा० | १८।५५ | ७२।३० | −१।४५। ० | ०।४२। ० |
| बरेली | उ० प्र० | २८।२२ | ७६।२७ | −०।३५।३० | ०।१४।१२ |
| बलिया | उ० प्र० | २५।४४ | ८४।११ | +०।११।५० | ०। ४।४४ |
| बस्ती | उ० प्र० | २६।४८ | ८२।४६ | −०। २।२० | ०। ०।५६ |
| बहराइच | उ० प्र० | २७।३४ | ८१।३८ | −०।१३।४० | ०। ५।२८ |
| बागपत | उ० प्र० | २८।५६ | ७७।१२ | −०।५८। ० | ०।२३।१२ |
| बांदा | उ० प्र० | २५।२० | ८०।२२ | −०।२६।२० | ०।१०।३२ |
| बारावंकी | उ० प्र० | २६।५३ | ८१।१३ | −०।१७।५० | ०। ७। ८ |
| बिजनौर | उ० प्र० | २६।२३ | ७८।११ | −०।४८।१० | ०।१६।१६ |
| बिलासपुर | म० प्र० | २२। ० | ८२।१० | −०। ८।२० | ०। ३।२० |
| बीकानेर | राज० | २८।०१ | ७३।२२ | −१।३६।२० | ०।३८।३२ |
| बीरगंज | नेपाल | २७।०१ | ८४।५६ | +०।१६।२० | ०। ७।४४ |
| बुद्धगया | बिहार | २४।४१ | ८५। २ | +०।२०।२० | ०। ८। ८ |

| नगरनाम | | उ० अक्षांश | पू० रेखांश | काशी से देशान्तर | |
|---|---|---|---|---|---|
| | | अं० क० | अं० क० | घ० प० वि० | घं०मि०से० |
| बुलन्दशहर | उ० प्र० | २८।२४ | ७७।५४ | −०।५१। ० | ०।२०।२४ |
| वेला | उ० प्र० | २५।५० | ८२। ० | −०।१०। ० | ०। ४। ० |
| बोकारोबाँध | विहार | २३।४७ | ८५।५० | +०।२८।२० | ०।११।२० |
| भभुआ | बिहार | २५। ५ | ८३।३५ | +०। ५।५० | ०। २।२० |
| भरतपुर | राज० | २७।१५ | ७७।३० | −०।५५। ० | ०।२२। ० |
| भागलपुर | विहार | २५।१५ | ८७।०२ | +०।४०।२० | ०।१६। ८ |
| भिलाई | म० प्र० | २१।१२ | ८१।२८ | −०।१५।२० | ०। ६। ८ |
| भुवेनश्वर | उड़ीसा | २०।१५ | ८५।५२ | +०।२८।४० | ०।११।२८ |
| भोपाल | म० प्र० | २३।१६ | ७७।३६ | −०।५४। ० | ०।२१।३६ |
| मउ | उ० प्र० | २५।५४ | ८३।३६ | +०। ६। ० | ०। २।२४ |
| मथुरा | उ० प्र० | २७।२८ | ७७।४१ | −०।५३।१० | ०।२१।१६ |
| मद्रास | तमिलनाडु | १३।०४ | ८०।१० | −०।२८।२० | ०।११।२० |
| मधुवनी | बिहार | २६।२१ | ८६।०७ | +०।३१।१० | ०।१२।२८ |
| मंडला | म० प्र० | २२।४३ | ८०।३५ | −०।२४।१० | ०। ९।४० |
| महोबा | उ० प्र० | २५।१८ | ७९।५५ | −०।३०।५० | ०।१२।२० |
| मांडले | ब्रह्मा | २१।५९ | ९६।०० | +२।१०। ० | ०।५२। ० |
| मिदनापुर | प० बं० | २२।२५ | ८७।२१ | +०।४३।३० | ०।१७।२४ |
| मिरजापुर | उ० प्र० | २५।१० | ८२।३७ | −०। ३।५० | ०। १।३२ |
| मुगलसराय | उ० प्र० | २५।१७ | ८३।११ | +०। १।५० | ०। ०।४४ |
| मुंगेर | विहार | २५।२३ | ८६।३० | +०।३५। ० | ०।१४। ० |
| मुजफ्फरनगर | उ० प्र० | २९।२८ | ७७।४४ | −०।५२।४० | ०।२१। ४ |
| मुजफ्फरपुर | विहार | २६।०७ | ८५।२७ | +०।२४।३० | ०। ९।४८ |
| मुर्शिदाबाद | प० बं० | २४।११ | ८७।१९ | +०।४३।१० | ०।१७।१६ |
| मुरादाबाद | उ० प्र० | २८।५१ | ७८।४९ | −०।४१।५० | ०।१६।४४ |
| मुरैना | म० प्र० | २६।२३ | ७८।०० | −०।५०। ० | ०।२०। ० |
| मेरठ | उ० प्र० | २९।०१ | ७७।४५ | −०।५२।३० | ०।२१। ० |
| मैनपुरी | उ० प्र० | २७।१४ | ७९।०३ | −०।३९।३० | ०।१५।४८ |
| मोतीहारी | बिहार | २६।४० | ८५।५७ | +०।२९।३० | ०।११।४८ |
| रक्सौल | विहार | २७। ० | ८४।५० | +०।१८।२० | ०। ७।२० |

| नगरनाम | | उ० अक्षांश | पू० रेखांश | काशी से देशान्तर | |
|---|---|---|---|---|---|
| | | अं० क० | अं० क० | घ० प० वि० | घं०मि०से० |
| रतलाम | म० प्र० | २३।३१ | ७५।०७ | – १।१८।५० | ०।३१।३२ |
| राउरकेला | उड़ीसा | २२।२५ | ८५।०० | + ०।२०। ० | ०। ८। ० |
| राँची | बिहार | २३।२३ | ८५।२३ | + ०।२३।५० | ०। ९।३२ |
| रामपुर | उ० प्र० | २८।४८ | ७९।०५ | – ०।३९।१० | ०।१५।४० |
| रायबरेली | उ० प्र० | २६।१४ | ८१।१६ | – ०।१७।२० | ०। ६।५६ |
| रायपुर | म० प्र० | २१।१५ | ८१।४१ | – ०।१३।१० | ०। ५।१६ |
| रीवाँ | म० प्र० | २४।३१ | ८१।१९ | – ०।१६।५० | ०। ६।४४ |
| रुड़की | उ० प्र० | २९।५२ | ७७।५३ | – ०।५१।१० | ०।२०।२८ |
| रंगून | ब्रह्मा | १६।४५ | ९६।१३ | + २।१२।१० | ०।५२।५२ |
| लखनऊ | उ० प्र० | २६।५४ | ८०।५९ | – ०।२०।१० | ०। ८। ४ |
| लन्दन | इङ्गलैण्ड | ५१।३० | ५०।०५ | – १३।५०।५० | ५।३२।२० |
| लहेरियास० | बिहार | २६।१० | ८५।५२ | + ०।२८।४० | + ०।११।२८ |
| लाहौर | पाकि० | ३१।१७ | ७४।२६ | – १।२५।४० | ०।३४।१६ |
| वृन्दावन | उ. प्र. | २७।३३ | ७७।४४ | ०।५२।४० | ०।२१। ४ |
| वाराणसी | उ. प्र. | २५।१८ | ८३।०० | ०। ०। ० | ०। ०। ० |
| विजयवाड़ा | आ. प्र. | १६।३१ | ८०।३९ | – ०।२३।३० | ०। ९।२४ |
| विजयानग. | आ. प्र. | १८।०७ | ८३।२७ | + ०। ४।३० | ०। १।४८ |
| शहडोल | म. प्र. | २३। ० | ८१।३० | – ०।१५। ० | ०। ६। ० |
| शाहजहाँपुर | उ. प्र. | २७।५४ | ७९।५७ | – ०।३०।३० | ०।१२।१२ |
| शिमला | हिमा. प्र. | ३१।०६ | ७७।१३ | – ०।५७।५० | ०।२३। ८ |
| शिलांग | मेघालय | २५।३४ | ९१।५६ | + १।२९।२० | ०।३५।४४ |
| शिवपुरी | म. प्र. | २५।२४ | ७७।४४ | – ०।५२।४० | ०।२१। ४ |
| शोलापुर | महाराष्ट्र | १७।४० | ७४।५६ | – १।२०।४० | ०।३२।१६ |
| श्रीनगर | जम्मू. | ३४।०६ | ७४।५१ | – १।२१।३० | ०।३२।३६ |
| श्रीरङ्गम् | तमिल. | १०।५२ | ७८।४४ | – ०।४२।४० | ०।१७। ४ |
| ऋषिकेश | उ. प्र. | ३०।०७ | ७८।१९ | – ०।४६।५० | ०।१८।४४ |
| सतना | म. प्र. | २४।३४ | ८०।५५ | – ०।२०।५० | ०। ८।२० |
| सम्बलपुर | उड़ीसा | २१।२८ | ८४।०१ | + ०।१०।१० | ०। ४। ४ |
| सम्भल | उ. प्र. | [illegible] | [illegible] | – ०।४४।१० | ०।१७।४० |

| नगरनाम | | उ० अक्षांश | पू० रेखांश | काशी से देशान्तर | |
|---|---|---|---|---|---|
| | | अं० क० | अं० क० | घ० प० वि० | घं०मि०से० |
| सरगोघा | पाकिस्तान | ३२।०२ | ७२।४० | – १।४३।२० | ०।४१।२० |
| सहरसा | बिहार | २५।५५ | ८६।३५ | + ०।३५।५० | ०।१४।२० |
| सहारनपुर | उ. प्र. | २९।५८ | ७७।२३ | – ०।५६।१० | ०।२२।२८ |
| सागर | म. प्र. | २३।५० | ७८।५० | – ०।४१।४० | ०।१६।४० |
| सासाराम | बिहार | २५। ० | ८४। ५ | + ०।१०।५० | ०। ४।२० |
| सिंदरी | बिहार | २३।४० | ८६।३० | + ०।३५। ० | ०।१४। ० |
| सीकर | राजस्थान | २७।३६ | ७५।५५ | – १।१०।५० | ०।२८।२० |
| सीतापुर | उ. प्र. | २७।३२ | ८०।४३ | – ०।२२।५० | ०। ९। ८ |
| सुल्तानपुर | उ. प्र. | २६।१६ | ८२।०७ | – ०। ८।५० | ०। ३।३२ |
| सूरत | गुजरात | २१।१२ | ७२।५२ | – १।४१।२० | ०।४०।३२ |
| सोनपुर | उड़ीसा | २०।५१ | ८३।५९ | + ०। ९।५० | ०। ३।५६ |
| सोमनाथ | गुजरात | २१।०४ | ७०।२६ | – २। ५।४० | ०।५०।१६ |
| सिंगापुर | मलाया | १।१७ | १०३।५१ | + ३।२८।३० | १।२३।२४ |
| हजारीबाग | बिहार | २३।५९ | ८५।२५ | + ०।२४।१० | ०। ९।४० |
| हमीरपुर | उ. प्र. | २५।५८ | ८०।१२ | – ०।२८। ० | ०।११।१२ |
| हरदोई | उ. प्र. | २७ २३ | ८०।१० | – ०।२८।२० | ०।११।२० |
| हरिद्वार | उ. प्र. | २९।५६ | ७८।०९ | – ०।४८।३० | ०।१९।२४ |
| हाथरस | उ. प्र. | २७।३६ | ७८।०६ | – ०।४९। ० | ०।१९।३६ |
| हापुड़ | उ. प्र. | २८।४३ | ७७।५० | – ०।५१।४० | ०।२०।४० |
| हावड़ा | प. बङ्गाल | २२।३५ | ८८।२३ | + ०।५३।५० | ०।२१।३२ |
| हैदरावाद | आ. प्र. | १७।२० | ७८।३० | – ०।४५। ० | ०।१८। ० |
| हँड़िया | उ. प्र. | २५।२४ | ८२।१५ | – ०। ७।३० | ०। ३। ० |
| त्रिपुरा | भारत | २३।४५ | ९१।३० | + १।२५। ० | ०।३४। ० |

बिहारप्रान्ते भोजपुरमण्डलान्तर्गते खजुरियांग्रामनिवासिश्रीचन्द्रमापाण्डेयेन सम्पादिता सान्वयव्याख्याहिन्दीटीकासहिता केशवीयजातकपद्धतिः परिपूर्णा ।

॥ इति शम् ॥

## ॥ टीकाकर्त्तुः संक्षिप्तपरिचयः ॥

अस्ति बिहारप्रान्ते भोजपुरमण्डलान्तर्गते खजुरियाँ नामाभिधो ग्रामः। यत्र च सरयूपारिणब्राह्मणानां ख्यातिः भुवि प्रसिद्धोऽस्ति। तत्र विप्रकूलभूषणः पण्डितश्रीरामव्रतपाण्डेयस्य द्वितीयभार्यायां पं० चन्द्रमा पाण्डेयस्य जातो जन्मः। बाल्ये वयसि स्वग्रामे पञ्चमकक्षां समुत्तीर्य नातिदूरे कारीसाथ इति नामधेयनगरे श्रीआदर्शमाध्यमिकविद्यालये सप्तमकक्षां समुत्तीर्य संस्कृताध्येतुकामः रोहतासमण्डलान्तर्गतघरवासडीहमठेति नाम्ना लब्धप्रतिष्ठस्थाने गत्वा संस्कृताध्ययने प्रवृत्तः। अस्ति तत्र गुरुकुलपरम्परा अद्यावधि। तत्र श्रीश्री १००८ अनन्तश्रीविभूषितगुरुप्रवररामानुचार्याणां महती कृपया कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयदरभङ्गेतिसंस्थया संवद्धः श्रीरामपाठशालाघरवासडीहमठतः प्रथमापरीक्षां १९६६ ई० उत्तीर्णवान्। तत्रत एव मध्यमाप्रथमखण्डं समुत्तीर्य आचार्य पं० श्रीगणेशदत्तत्रिपाठिना निर्देशनेन काशीमागत्य काशीहिन्दूविश्वविद्यालयीयप्राच्यविद्याधर्मविज्ञानसंकायतः मध्यमादितोऽऽचार्यपर्यन्तं प्रथमश्रेण्यां समुत्तीर्य स्वर्णपदकसहितं ज्योतिषशास्त्राचार्येति पदवीं प्राप्तवान्। अथ च यू०जी०सी० छात्रवृत्तिं प्राप्य ज्योतिषविभागे गुरुणां गुरवः पं० राजमोहनउपाध्यायाः ज्योतिषविभागाध्यक्षाः प्रोफेसरपदासीनाः संकायप्रमुखाश्च एतेषां निर्देशने सूर्यसिद्धान्तग्रन्थस्य विशिष्टं पर्यालोचनमिति विषयमवलम्ब्य शोधकार्ये प्रवृत्तः। मध्य एव मथुरायां श्रीमाथुरचतुर्वेदसंस्कृतमहाविद्यालये ज्योतिषविभागाध्यक्षपदे नियुक्तस्तत्र अध्यापनार्थं गतः। ततः काशी हिन्दूविश्वविद्यालये ज्योतिषपञ्चाङ्गविभागे नियुक्तिसंजाते काशीमागत्य ज्योतिषविभागे नियुक्तः। पुस्तकमाध्यमेनापि भारतीयविद्यानां संस्कृतिनाञ्च रक्षणं भवितुमर्हतीति कृत्वा पुस्तकलेखनेऽपि प्रवृत्तः। तत्र प्रथमा कृतिः "केरलीयप्रश्नसंग्रहः" विद्यते या च शास्त्री कक्षायां पाठ्यग्रन्थे निर्धारितोऽस्ति। अथ च द्वितीया कृतिः "केशवीयजातकपद्धति"रस्ति। या च भगवत्कृपया विलिखिता विद्यते।

इतिशम्

# हमारे प्रकाशन

१. अध्यात्मरामायण भा० टी० शीघ्र

२. भारतीय सुषिरवाद्यों का इतिहास
—डॉ० आर० एस० जायसवाल ६०-००

३. केरलप्रश्नसंग्रह—हिन्दी टीका
—आचार्य चन्द्रमा पाण्डेय ४-०

४. योगतारावली—श्री शङ्कराचार्य प्रणीत
संस्कृत एवं शाङ्करी हि० टी०
—स्वामी दयानन्द शास्त्री ८-००

५. केशवीयजातकपद्धतिः सान्वयव्याख्या
एवं हिन्दी टीका सहित
—आचार्य चन्द्रमापाण्डेय २८-००

६. वरिवस्या रहस्य प्रकाश संस्कृत एवं हिन्दी टीका
—आचार्य विश्वनाथ पाण्डेय २५-००

७. ब्रह्मसूत्र चतुःसूत्री रहस्य
—पं० कृष्णकान्त शर्मा १०-००

८. ब्रह्मसूत्र वेदान्त विमर्श २०-००

९. महाकाली पञ्चाङ्ग यन्त्रस्थ ८-००
—सम्पा०—आचार्य चन्द्रमा पाण्डेय

१०. आदिवाराही पञ्चाङ्ग " " " ८-००

११. महालक्ष्मी " " " " ८-००

१२. महासरस्वती " " " " ८-००

